# श्रीवेङ्कटाचलमाहात्म्यम्

( हिन्दी अनुवादसहितम् )

प्रथमभागः

वराह-भविष्योत्तरपुराणसंगृहीतम्

सम्पादकः

**प्रोफेसर् एस. बि. रघुनाथाचार्यः**

संस्कृतविभागाध्यक्षः,

श्रीवेङ्कटेश्वरविश्वविद्यालयः, तिरुपति

प्रकाशकः

**श्री एम्. वि. एस्. प्रसादः,** ऐ.ए.एस्.

कार्यनिर्वहणाधिकारी,

तिरुमल-तिरुपतिदेवस्थानम्, तिरुपति

1991

**SRĪVENKATĀCHALAMĀHĀTMYAM**

with Hindi Translation

VARĀHA & BHAVISYOTTARA PURANAS

Vol. I


Edited by

**Prof. S. B. Raghunathacharya**



First edition : 1929

Second edition : 1991






Copies : 5000

Published by

**Sri M. V. S. Prasad, I.A.S.**

Executive officer,

T. T. Devasthanams,

Tirupati






**Price :**

Printed at :

Hindi Prachar Press,

T.Nagar, Madras-17.

# भूमिका

**श्री एम्. वि. एस्. प्रसादः**

कार्यनिर्वहणाधिकारी,

तिरुमल-तिरुपति देवस्थानम्, तिरुपति

श्रीवेङ्कटाचलमाहात्म्यमिदं तत्तत्पुराणेभ्यः संगृह्य बहोः कालात्प्रागेव ग्रन्थरूपेण तिरुमल-तिरुपतिदेवस्थानेन प्रकटीकृतम् । मूलग्रन्थः देवनागरिलिप्यां आन्ध्रलिप्यां च देवस्थानेनैव मुद्रितः । तथा समग्रस्य श्रीवेङ्कटाचलमाहात्म्यस्य हिन्दीभाषानुवादः महन्त् श्रीप्रयागदासमहोदयैः १९२९ वत्सरे भागद्वयात्मकः प्रकाशितः । सम्प्रति तदेव संस्करणं तिरुमल-तिरुपतिदेवस्थानपुस्तकसमन्वयाधिकारिभिः प्रो. एस्. बि. रघुनाथाचार्यमहोदयैः सम्पादितं वराह-भविष्योत्तरपुराणसङ्गृहीतं पुनः प्रकाश्यते ।

उत्तरभारतीयानां हिन्दीभाषाभाषिणां श्रीवेङ्कटेश्वरभक्तानामयं ग्रन्थः परमुपकारकः भवेदिति सम्भाव्यते । श्रीवेङ्कटाद्रेः तत्रत्यानां विविधानां तीर्थानां भगवतो परब्रह्मभूतस्य श्रीश्रीनिवासस्य च वैशिष्ट्यं अनयोरेव पुराणयोः सुष्ठु प्रत्यपादीति कृत्वा एवं प्रथमभागः सज्जीकृतः । एवमचिरादेव अन्ये च भागाः प्रकाशं नेष्यन्त इति मे सुदृढो विश्वासः ।

ग्रन्थमिमं सम्यक् सम्पादितवद्भ्यः आचार्यवर्येभ्यः श्रीरघुनाथाचार्येभ्यः, यथायोग्यं मुद्रितवद्भ्यः मद्रपुरीस्थदक्षिणभारतहिन्दीप्रचारमुद्रणालयाधिकारिभ्यश्च मदीयं कार्तज्ञ्यमावेद्यते ।

'सदा वेङ्कटेशं स्मरामि स्मरामि'

१८-४-१९९१ **एम्. वि. एस्. प्रसादः**

# प्रस्तावना

प्रोफेसर् एस्. बि. रघुनाथाचार्यः
आचार्यः अध्यक्षश्च
संस्कृतविभागः
श्रीवेङ्कटेश्वरविश्वविद्यालयः
तिरुपति ।

**1. परिचयः :**

जगदुदयविभवलयलीलस्य परब्रह्मणः दिव्यावतारभूतस्य भगवतः श्रीनिवासस्य आवासस्थानं वेङ्कटाचल इति सुप्रथितं परमपदसमानयोगक्षेमं समिन्धे । श्रीवैकुण्ठ-विरक्तोऽयं स्वामिपुष्करिणीतीरे जगज्जनन्या रमया सह रममाणः कलियुगप्रत्यक्ष-दैवतमिति शतकोटिसंख्याकैः भक्तजनैः संसेव्यते प्रतिदिनमिति न परोक्षं भक्त-जनानाम् । तस्य महामहिम्नः आपद्बान्धवस्य भक्तपराधीनस्य भगवतः श्रीवेङ्कटेश्वरस्य, तन्निवासभूतस्य श्रीवेङ्कटाचलस्य च माहात्म्यं श्रुतिस्मृतीतिहास-पुराणादिषु बहुधा प्रस्तुतं बोभवीतीति सूपपादम् । तदिदं श्रीवेङ्कटाचलमाहात्म्य-नाम्ना पुराणेषु सुप्रसिद्धं तिरुमल-तिरुपतिदेवस्थानेन बहोः कालात्प्राक् प्रकटीकृतं सम्प्रति हिन्दीभाषानुवादेन सह प्रकाश्यतां नीयते ।

**2. क्षेत्रमाहात्म्यानि :**

भारतवर्षेऽस्मिन् विलसन्ति बहूनि दिव्यक्षेत्राणि । येषु स्वयंव्यक्ताः, प्रतिष्ठिता वा मूर्तयः अर्चिता भक्तानामभीष्टान्यभिवर्षन्ति । तत्र तत्र, तदा तदा प्रादुर्भूतानि बहूनि तीर्थानि च भवन्ति । यदवगाहनैः मानवानां आधिव्याधि-निर्मूलनं सुकरमिति परम्परया श्रूयते । एतेषां क्षेत्राणां तत्र स्थितानां तीर्थ-विशेषाणां च स्वरूपप्रभावादिकं तत्र तत्र पुराणेषु समभिवर्णितं चकास्ति । यच्च माहात्म्यपदेन लब्धव्यवहारं समुल्लसति ।

क्षेत्रमाहात्म्यानीमानि विविधेषु पुराणेषु सम्यगभिवर्णितानि । तेषु श्रीवेङ्कटाचलक्षेत्रमाहात्म्यं बहुधा बहुषु पुराणेषु अभ्यवर्णि । प्रायः एकादश-पुराणेषु माहात्म्यमिदं उपलभ्यत इति विज्ञायते ।

## 3. श्रीवेङ्कटाचलमाहात्म्यम् :

भक्तानुकम्पया भुवमवतीर्णस्य भगवतः श्रीनिवासस्य वैकुण्ठापेक्षयातीव प्रियं श्रीवेङ्कटाचलमिति तस्य क्षेत्रस्य महिमा इयानिति वर्णयितुं न शक्यते। अमेय-विभवस्यानन्तकल्याणगुणस्य परब्रह्मभूतस्य श्रीवेङ्कटेशस्य, पुरुषकारस्वामिन्याः भगवत्याः पद्मावत्याश्च कल्याणचरितमस्मिन् वेङ्कटाचलमाहात्म्ये सम्यगभि-वर्णितम्। न केवलं तत् अन्वर्थनामधेयायाः स्वामिपुष्करिण्याः, अन्येषाञ्चासंख्यानां तीर्थानाञ्च प्रभावः अस्मिन् क्षेत्रमाहात्म्येऽभिवर्णितः।

पुराणवाङ्मये एकादशपुराणेषु तावदिदं श्रीवेङ्कटाचलमाहात्म्यं बहुसंख्याकेषु अध्यायेषु सविस्तरमभिवर्णितम्।

### 3.1. पुराणवाङ्मयप्रसिद्धिः :

चतुर्दशविद्यास्थानेष्वन्यतमं पुराणं इतिहासेन सह वेदोपबृंहणमातनुत इति महाभारत एवमुपदिश्यते—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदः मामयं प्रतरिष्यति ॥[1]

अथर्ववेदे पुराणवाङ्मयस्य वेदैस्साकं समानं स्थानं अस्तीत्येवं श्रूयते—

ऋचः सामानि छन्दांसि पुराणं यजुषा सह।
उच्छिष्टा जज्ञिरे सर्वे दिवि देवा दिविश्रितः ॥[2]

छान्दोग्योपनिषदि इतिहासपुराणानां पञ्चमवेदत्वं एवं प्रत्यपादि—

"इतिहासपुराणः पञ्चमो वेदानाम्"[3]

वेदवेदाङ्गपारगेणापि पुराणवाङ्मयमवश्यमध्येयं; नो चेत् तस्य पूर्णता न सिद्ध्यतीति वायुपुराणमेवं बोधयति—

यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः।
न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः ॥"[4]

अतः पुराणवाङ्मयं भारतीयसंस्कृतेः मूलभूतं वर्वर्तीति सारः।

---

1. म. भा. आदि. 1.267.
2. अ. सं. 11. 7. 24.
3. छा. उ. VII. 1.24.
4. वा. पु. 1. 2. 180.

### 3.1.1 पुराणशब्दनिर्वचनम् :

पुराणशब्दोयं प्राचीनकालमंवृत्तानामुदन्तानां प्रख्यापकं वाङ्मयमभिधत्ते। 'पुरा भवं पुराणम्' 'पुरापि नवं पुराणम्' 'पुरा आगतानागतौ अणति कथयतीति पुराणम्' 'पुरा नीयते इति पुराणम्' इति शब्दोऽयं बहुधा व्युत्पादितः निरुक्तादिषु। अयं भावः—यत् प्राचीनकालसम्बन्धिनः नित्यनूतनस्य सर्गादिविषय-प्रतिपादकस्य वाङ्मयस्य बोधकः पुराणशब्दोऽसाविति निश्चप्रचं वचः।

### 3.1.2 अष्टादशपुराणानि :

पुराणानीमानि महापुराणोपपुराणभेदेन द्विधा भिन्नानि। तत्र महापुराणानि अष्टादशसंख्याकानीति लोकप्रसिद्धिः। तन्नामाद्याक्षरसङ्ग्राहकः श्लोकोऽयं अत्रोदाहरणमर्हति—

मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम्।
अनापलिङ्गकूस्कानि पुराणानि पृथक् पृथक्॥

इमानि खल्वष्टादश महापुराणानि—

| | | | |
|---|---|---|---|
| 1. | मत्स्यपुराणम् | 10. | वायुपुराणम् |
| 2. | मार्कण्डेयपुराणम् | 11. | वामनपुराणम् |
| 3. | श्रीमद्भागवतम् | 12. | अग्निपुराणम् |
| 4. | भविष्यपुराणम् | 13. | नारदपुराणम् |
| 5. | ब्रह्मपुराणम् | 14. | पद्मपुराणम् |
| 6. | ब्रह्माण्डपुराणम् | 15. | लिङ्गपुराणम् |
| 7. | ब्रह्मवैवर्तपुराणम् | 16. | गरुडपुराणम् |
| 8. | विष्णुपुराणम् | 17. | कूर्मपुराणम् |
| 9. | वराहपुराणम् | 18. | स्कान्दपुराणम् |

एषु पुराणेषु वैष्णवादीनि षट् सात्विकानि, ब्रह्माण्डादीनि षट् राजसानि, मत्स्यादीनि षट् तामसानीति पाद्मपुराणं प्रतिपादयत्येवम्—

वैष्णवं नारदीयञ्च तथा भागवतं शुभम्।
गारुडञ्च तथा पाद्मं वाराहं शुभदर्शने॥
ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च।
भविष्यं वामनं ब्राह्मं राजसानि निबोधत॥

मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च ।
आग्नेयञ्च षडेतानि तामसानि निबोधत ।।

### 3.1.3. उपपुराणानि :

महापुराणानीवोपपुराणान्यपि सनत्कुमारादीनि भवन्त्यष्टादशेति केचित्, नारदीयादीनि चतुस्त्रिंशदिति केचित् भिन्नभिन्नतया अभिप्रयन्ति ।

### 3.1.4. पुराणलक्षणम् :

पुराणमिदं सर्गादिपञ्चलक्षणमिति प्राचीना एवं कथयन्ति—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितञ्चेति लक्षणानां तु पञ्चकम् ।।

उपरितनानि पञ्चलक्षणानि उपपुराणसम्बन्धीनि । महापुराणानां तु दश लक्षणानि भवन्तीति श्रीमद्भागवतमेवं विवृणोति—

पुराणलक्षणं ब्रह्मन् ब्रह्मर्षिभिर्निरूपितम् ।
श्रुणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः ।।

सर्गोऽस्याथ विसर्गश्च वृत्तिरक्षान्तराणि च ।
वंशो वंश्यानुचरितं संस्थाहेतुरपाश्रयः ।।

दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः ।
केचित्पञ्चविधं ब्रह्मन्! महदल्पव्यवस्थया ।।

## 3.2. पुराणेषु श्रीवेङ्कटाचलमाहात्म्यम् :

परब्रह्मभूतस्य भगवतः श्रीवेङ्कटाचलनाथस्य श्रीनिवासस्य भूतलप्रसिद्धस्य श्रीवेङ्कटाचलस्य, तत्रस्थानां पुण्यतीर्थानाञ्च महत्वादिवर्णनं श्रीवेङ्कटाचलमाहात्म्य-नाम्ना सुप्रथितं वरीवर्ति केषुचित्पुराणेषु । तत्तत्पुराणस्थानां माहात्म्यानां सङ्ग्रहः श्रीवेङ्कटाचलमाहात्म्यनाम्ना प्रसिद्धः तिरुमलतिरुपतिदेवस्थानेन बहोः कालात्प्रागेव प्रकटितः । यस्मिंश्च ग्रन्थे श्रीवेङ्कटाचलस्य युगभेदेन नामभेदः श्रीशेषशैलादिषु विद्यमानानां विभिन्नतीर्थानां माहात्म्यं, स्वामिपुष्करिणीमाहात्म्यं पद्मावतीश्रीनिवासवृत्तान्तः इत्यादयो विषयाः सविस्तरं प्रतिपादिताः ।

## 3.3. एकादशपुराणानि :

अधोनिर्दिष्टेषु एकादशसंख्याकेषु पुराणेषु श्रीवेङ्कटाचलमाहात्म्यमभिवर्णितम् :

1. वराहपुराणम्
2. पद्मपुराणम्
3. गरुडपुराणम्
4. हरिवंशपुराणम्
5. ब्रह्माण्डपुराणम्
6. मार्कण्डेयपुराणम्
7. वामनपुराणम्
8. ब्रह्मपुराणम्
9. स्कान्दपुराणम्
10. आदित्यपुराणम्
11. भविष्योत्तरपुराणम्

एभ्यः पुराणेभ्यः तत्तदध्यायेषु अभिवर्णितं श्रीवेङ्कटाचलमाहात्म्यं संगृह्य तिरुमल-तिरुपतिदेवस्थानेन प्रकटितम् ।

## 3.4. वराहपुराणम् :

श्रीवेङ्कटाचलमाहात्म्याभिवर्णनपरेषु पुराणेषु वराहपुराणं सर्वप्रथमं वर्वर्ति । अत्र श्वेतवराहकल्पवृत्तान्तमारभ्य स्वामिपुष्करिणीवैभवं, भगवतः क्रीडाद्रेः वेङ्कटाद्रित्वं, कपिलतीर्थ-पाण्डवतीर्थ-जराहरतीर्थादिविविधतीर्थप्रशंसा, श्रीवेङ्कटेश्वरमहोत्सवादि प्रथमभागे अभ्यवर्णि । द्वितीयभागे च धरणीवराहसंवादः, स्वामिपुष्करिणी-कुमारधारा-तुम्बतीर्थं - आकाशगङ्गातीर्थं - पापनाशनतीर्थादिवर्णनं, पद्मावत्याः आविर्भावः, श्रीनिवासमृगयाविहारः, पद्मावतीश्रीनिवाससमागमः, वकुलमालिकावृत्तान्तः, पद्मावतीपरिणयघट्टः, रङ्गदासवृत्तान्तः, तोण्डमान्नृपवृत्तान्तः, अस्थिसरोवरवृत्तान्तः, कुर्वग्रामस्थभीमाख्यभक्तोदन्त इत्याद्याः अंशाः निरूपिताः ।

## 3.5. भविष्योत्तरपुराणम् :

उपपुराणतया परिगणितस्य भविष्योत्तरपुराणस्य श्रीवेङ्कटाचलमाहात्म्याभिवर्णने प्राधान्यं बहुधा चकास्ति । पुराणेऽस्मिन् वृषभाचल-अञ्जनाचल-शेषाचल-वेङ्कटाचलादिनामनिष्पत्तिः, भृगुपरीक्षा, स्वामिपुष्करिणी माहात्म्यं, श्रीनिवासस्य वल्मीकप्रवेशः, गोक्षीरपायिनः श्रीनिवासस्य गोपकृतताडनं, वकुलमालिकापूर्ववृत्तान्तः, पद्मावतीजननं, पद्मावतीपूर्वजन्मवृत्तान्तः, श्रीनिवासस्य पुल्कसीरूपधारणं, पद्मावतीपरिणयः, तोण्डमान्-वसुदानकलहः, ब्रह्मणा कृतः महोत्सवः, कूर्मद्विजवृत्तान्तः, भीमाख्यकुलालोदन्तः, रहस्याध्यायः इत्यादयोंऽशाः सविस्तरमभिवर्णिताः ।

**3.6. वराह्-भविष्योत्तरप्रमेयवैशिष्ट्यम् :**

वराह्-भविष्योत्तरपुराणयोः इतरपुराणापेक्षया इमे त्रयः अंशाः विलक्षणतया निरूपिता :—

1. विविधतीर्थप्रशंसा
2. श्रीवेङ्कटाद्रिवैभवः
3. पद्मावती-श्रीनिवासवृत्तान्तः

अतः पुराणद्वयमिदं यदि समीक्ष्यते तर्हि समग्रस्य वृत्तान्तस्य अवगाहनं सम्पद्यत इति प्रथमभागेऽस्मिन् तयोः निवेशः कृतः ।

**4. हिन्दीभाषानुवाद :**

अस्य श्रीवेङ्कटाचलमाहात्म्यस्य पण्डितप्रवरेण करमानिवासिना श्रीकेशरी-कान्तशर्मणा, कलकत्तायां श्रीसावित्रीपाठशालाध्यापकेन पण्डितवरेण श्रीलक्ष्मीधर-पाठकेन च हिन्दीभाषानुवादः सज्जीकृतः । स च ग्रन्थः म. म. श्री अनन्तकृष्ण-शास्त्रिमहोदयैः सम्पादितः महन्त् श्रीप्रयागदासमहाशयैः 1929 वत्सरे प्रकाशितः । इदमेवास्य ग्रन्थस्य प्रथमं संस्करणम् ।

**4 1. द्वितीयसंस्करणम् :**

प्रायः पञ्चाशद्वर्षेभ्यः प्राक् प्रकटितस्य ग्रन्थस्यास्य नैतावता कालेन पुनर्मुद्रणं सञ्जातम् । तदानीन्तनान्ध्रप्रदेशमुख्यमन्त्रिवरेण्यैः आर्षधर्मसमुद्धरणबद्धदीक्षैः डा. एम्. चेन्नारेड्डि महोदयैः अस्य ग्रन्थस्य पुनर्मुद्रणाय प्रोत्साहो दत्तः । तत्समये तिरुमल-तिरुपति देवस्थानकार्यनिर्वहणाधिकारिभिः अनितरसाधारण-प्रज्ञाधुरीणैः श्रीमद्भिः श्री पि. वि. आर्. के. प्रसादमहोदयैः ग्रन्थोऽयं सम्पादनीय इति जनोऽयमाज्ञप्तः । अन्तरायसन्तत्या असकृदवरोध उपजातः ग्रन्थस्यास्य मुद्रणविषये । कथञ्चित् अद्यतनकार्यनिर्वहणाधिकारिणां असमानशेमुषीविभवानां श्रीमतां श्री एम्. वि. एस्. प्रसादमहोदयानां प्रोत्साहेन ग्रन्थोऽयमद्य प्रकटीक्रियते ।

हिन्दीभाषानुवादः प्रथमसंस्करणानुरोधं यथातथं ग्रन्थेऽस्मिन् प्रकाशितः । न तत्र केऽपि विपरिणामाः कृताः । मूलग्रन्थपाठादिषु तत्र तत्रोचिततरः पाठः विनिवेशितः । परब्रह्मभूतः आश्रितभक्तवत्सलः श्रीपद्मावतीजानिः भगवान् श्रीवेङ्कटनाथः श्रीनिवासः प्रीयतां भक्त्युपहारेणानेनेति सम्प्रार्थ्य विरम्यते ।

सत्यम्
9-12-1990.

—एस्. बि. रघुनाथाचार्यः ।

# विषयानुक्रमणिका

## वराहपुराणम्

### प्रथम भागः

पृष्ठ संख्या

## द्वितीय भागः

# भविष्योत्तरपुराणम्

श्रीश्रीनिवासपरब्रह्मणे नमः

श्रीवराहपुराणान्तर्गतं

# श्रीवेङ्कटाचलमाहात्म्यम्

## प्रथमो भागः

### ❁ श्रीश्वेतवराहकल्पवृत्तान्तकथनम् ❁

श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेंकटनिवासाय श्रीनिवासाय मङ्गलम् ॥ १ ॥

श्रीवेंकटाचलाधीशं श्रियाध्यासितवक्षसम् ।
श्रितचेतनमन्दारं श्रीनिवासमहं भजे ॥ २ ॥

श्रीमते भूवराहाय नमः कृत्स्ना वसुन्धरा ।
उद्धृता येन पातालाद्वासार्थं सर्वदेहिनाम् ॥ ३ ॥

नमो यज्ञवराहाय कृष्णाय शतबाहवे ।
नमस्ते वेदवेदान्तवपुषे विश्वरूपिणे ॥ ४ ॥

प्रलय के जल-प्लावन-काल में, हिरणि अक्ष महासुरने मही ।
उदधि घोर अनन्त पताल में, गिरि प्रदेश समेत छिपाय दी ॥ १ ॥

महि महा प्रभु खोजन सिन्धु में, धर वराह स्वरूप प्रवेश की ।
कर महारण राक्षस मारि के, धरणि बाहर शीघ्र निकाल ली ॥ २ ॥

महि फणायत की दृढ भाव से, रहन हेतु चराचर मात्र के ।
अमर वृन्द प्रफुल्लित चित्त में, दुरित शेष निरापद देखि के ॥ ३ ॥

अज अनादि प्रभू परमेश की, बहुविधि स्तुतियाँ कखद्ध की ।
निज गिरा मह सूत महर्षि ने, कहि कथा सित कल्प वराह की ॥ ४ ॥

# श्री श्वेतवराहकल्पवृत्तान्त की कथा

श्री लक्ष्मीकान्त, कल्याणसागर, अर्थियों के निधि, श्री वेंकटाचल पर्वत पर निवास करने वाले, सकल सौन्दर्यागार, श्री वेंकटेश भगवान का मंगल हो। जो श्री वेंकटाचल के स्वामी हैं, जिनके हृदय में श्री लक्ष्मीजी निवास करती हैं, जो शरणागत प्राणिमात्र के कल्पवृक्ष हैं, जो श्री के आधार हैं, उन्हीं श्री वेंकटेश भगवान को प्रणाम करता हूँ। श्रीमान् भूवराह भगवान को बारंबार प्रणाम करता हूँ, जिन्हों ने सभी शरीरधारियों के रहने के लिये सम्पूर्ण पृथ्वी को पाताल से निकाला है। श्री यज्ञवराह, कृष्ण, शतबाहु, वेदस्वरूप तथा विराट विश्वमूर्ति देव को प्रणाम करता हूँ। (१-४)

**मुनय ऊचुः—**

भगवन् ! सूत ! धर्मज्ञ वेदव्यासकृपानिधे ।
विष्णुस्थानेषु सर्वेषु स्वयंव्यक्तस्थलेषु च ।। ५ ।।

यत्र विष्णोरतिप्रीतिर्यत्र सिद्ध्यन्ति सिद्धयः ।
अत्यद्भुतं च चारित्रं यत्र विष्णोः प्रवर्तते ।। ६ ।।

मनुष्याणां च वसतां यत्र दृश्यो भवेद्धरिः ।
श्रवणानन्दजनको वृत्तान्तो यस्य वा भवेत् ।। ७ ।।

तादृशं वैष्णवं क्षेत्रमद्भुतं प्रियदर्शनम् ।
अस्माकं ब्रूहि यच्छ्रुत्वा श्रोतव्यांशो न विद्यते ।। ८ ।।

इति पृष्टस्तदा सूतस्तपोध्यानसमाधिमान् ।
ध्यात्वा मुहूर्तमात्रं तु प्रोवाच मुनिसत्तमान् ।। ९ ।।

**मुनियों ने कहा**—'हे वेदज्ञ, कृपानिधान, धर्मज्ञ, भगवान सूतजी, आप विष्णु भगवान के उस मनोहर, अद्भुत, आकर्षक स्थान का वर्णन कीजिये, जो सभी विष्णुस्थानों में श्रेष्ठ और स्वयं व्यक्त है, जिससे विष्णु को अत्यन्त प्रेम है, जहाँ सभी सिद्धियाँ सिद्ध होती हैं, जहाँ विष्णु का अत्यद्भुत चरित होता है, जहाँ रहते हुए मनुष्यों को भगवान् दिखाई देते हैं, जिसके वृत्तान्त कानों को अत्यन्त

आनन्ददायक और मधुर हैं, जिसको सुनकर पुनः कोई भी श्रवणीय अंश बाकी नहीं रह जाता। यह सुनकर श्री सूतजी ने, क्षणमात्र सोचकर, तप, ध्यान, समाधि सहित श्रेष्ठमुनि वर्गों से कहा। (५-९)

**श्री सूत उवाच—**

अहो ! पृष्टमपूर्वं च कौतुकं भवतामहो ! ।
ममापि वाञ्छा महती वक्तुं तत्तु वदामि वः ।। १० ।।

श्रुणुध्वं मुनयो यूयं सावधानतया त्विमम् ।
क्रीडारसेषु सक्तस्य हरेः क्रीडासमन्वितम् ।। ११ ।।

विविधैस्तस्य चारित्रैरुपेतं सर्वसिद्धिदम् ।
सर्वैश्वर्यकरं नृणां सर्वाश्चर्यप्रदं शुभम् ।। १२ ।।

पुण्यं पवित्रमायुष्यं सर्वमङ्गलकारकम् ।
वाराहकल्पवृत्तान्तं शेषाचलसमाश्रयम् ।। १३ ।।

**श्री सूतजी कहने लगे**—हे मुनि श्रेष्ठो ! आप लोगों ने अत्यन्त कौतूहल जनक और एकदम अपूर्व वृत्तान्त पूछा और इसीलिये मेरी भी बहुत इच्छा होती है कि मैं उसे कहूँ। अतः मैं उसे आप लोगों से अवश्य कहूँगा। हे मुनियो ! आप लोग सावधान होकर सुनिए। क्रीड़ारसों में सर्वोत्तम भगवान की क्रीड़ा से सुघटित और उनके अनेक भाँति भाँति के चरितों से परिपूरित सभी सिद्धियों को देनेवाला, सभी ऐश्वर्य को करनेवाला, मनुष्यों को सदा आश्चर्य एवं शुभफल को देनेवाला, परम पवित्र, आयु को बढ़ानेवाला एवं सभी तरह के मंगलकारक श्री शेषाचल से सम्बन्धी श्री वराहकल्प का वृत्तान्त ही है। (१०-१३)

पुरा हि सागरैः सर्वैरेकीभूते महीजले ।
कल्पादौ भगवान् विष्णुर्वटपत्रसमाश्रयः ।। १४ ।।

महर्लोकं समाश्रित्य स्थितं च जलसंप्लवम् ।
विचिन्त्य युगसाहस्रं जलावस्थानमद्भुतम् ।। १५ ।।

यथापूर्वं जगत्स्रष्टुमुद्युक्तः सर्वशक्तिमान् ।
सर्वस्य धाता प्रवरो महात्मा सर्वात्मगः सर्वजगत्स्वरूपः ।
सर्वेश्वरः सर्वविधानयत्नं चकार बुध्या तरुणाम्बुजाक्षः ।। १६ ।।

इतीरितास्ते मुनयस्तदानीं सविस्मयोत्फुल्लहृदम्बुजाश्च ।
सूतं महान्तं मुनिसङ्घसेव्यं तमवब्रुन् वेदविदां वरिष्ठम् ।। १७ ।।

कल्पादि काल में सभी समुद्रों का एक होकर जलमय जाने पर विष्णुभगवान वट के पत्ते का आश्रय लेकर महर्लोक में आश्रित रह जल के महाप्रलय में हजारों युगपर्यन्त अद्भुत जलस्थान पर चिंतन करते हुए रहने लगे। (१४-१५)

सर्वशक्तिमान भगवान संसार की रचना यथापूर्व करने का उद्यत हुए। सबको धारण करनेवाले, सर्व श्रेष्ठ महात्मा, सबों के आत्मस्वरूप. सबके स्वामी सबके विधाता, नवीन कमल के समान आंखवाले, भगवान ने अपने मन में सृष्टि-रचना का विचार किया। यह सुनकर वे मुनिगण आश्चर्य एवं आनन्द से भरकर वेदज्ञों में श्रेष्ठ, मुनिवर्गों से सेवित महात्मा सूतजी से बोले। (१६-१७)

**मुनय ऊचुः—**

'अतीतानागतज्ञानप्रकाशितहृदम्बुज ! ।
उद्योगानन्तरं विष्णुः कृतवान् किं रमापतिः ।। १८ ।।

कीदृशः प्रलयः कल्पः सर्गो वा कीदृशः पुनः ।
एतावद्वा जलं कस्मादागतं वद सुव्रत ! ।। १९ ।।

कुत्र वा धरणी याता गिरयो वा महोन्नताः ।
तत्सर्वं शंस भगवन् ! श्रोतुं कौतूहलं हि नः ।। २० ।।

इति पृष्टः पुनः प्राह सूतस्तान् मुनिपुङ्गवान् ।

**मुनियों ने कहा**—हे महामुनि, हे अनन्त, भूत और भविष्य ज्ञान से प्रकाशित हृदयवाले! रमापति भगवान विष्णु ने इसके उपरांत कौन सा उद्योग किया? किस प्रकार का प्रलय था? कैसा कल्प था तथा किस प्रकार का सर्ग हुआ था?

अथ च इतना जल कहाँ से आ गया था? पृथ्वी कहाँ चली गयी थी? और अत्यन्त ऊँचे ऊँचे पर्वत क्या हो गये थे? हे भगवन! वह सभी कुछ हम लोगों से कहिए, हम लोगों को अत्यन्त कौतूहल हो रहा है।

यह पूछने पर श्री सूतजी ने उन मुनिश्रेष्ठों से कहना आरंभ किया। (१८-२१)

**सूत उवाच—**

मुनयः श्रूयतां पूर्वं संग्रहेण जलागमः ॥ २१ ॥

चतुर्युगसहस्राणि प्रमाणं दिवसस्य च ।
निशायास्तावदेवास्य निर्दिष्टस्समयो विधेः ॥ २२ ॥

दिनावसानसमये ब्रह्मणो भगवान् रविः ।
सहस्ररश्मिस्तपति त्रिमूर्त्यात्मा त्रिलोचनः ॥ २३ ॥

वसत्यग्नि महाघोरं घर्मदीधितिरंशुभिः ।
कतिचिद्वत्सरानेवं वृष्टिर्नैव भवेत्तदा ॥ २४ ॥

भूलोकवासिनः सर्वे मुनयश्च तपोधनाः ।
वसेयुर्जनलोके हि यावद्ब्रह्मनिशा तदा ॥ २५ ॥

वनानि पर्वताश्चापि दग्धाः कालाग्निना तदा ।
भस्मीभूता भवन्त्येव वायुस्सर्वात्मको महान् ॥ २६ ॥

हायनान् कतिचिद्वाति पश्चान्मेघा महाबलाः ।
स्थूणाकाराः सृजन्त्येव तोयधाराः समन्ततः ॥ २७ ॥

सन्ततं वत्सरानेवं कतिचित्तु निशामुखे ।
द्रवीभूता महाभूमिः पातालतलगामिनी ॥ २८ ॥

सागराः सप्तचान्योन्यं भवेयुस्संयुतास्तदा ।
महर्लोकं समाक्रम्य तिष्ठन्त्येकोदकास्तदा ॥ २९ ॥

तथैव युगसाहस्रं ब्रह्मणः शर्वरी भवेत् ।

**श्री सूतजी ने कहा**—हे मुनियो! जल का आगम संक्षेप में सुनो। चार हज़ार युग का ब्रह्मा का एक दिन होता है और उनकी रात्रि का प्रमाण भी इतनी ही है। दिनावसान के समय भगवान सूर्य, जो त्रिमूर्त्यात्मा हैं और त्रिलोचन हैं हज़ारों किरणों से तपने लगे और उत्कट गर्मी धारण करनेवाली किरणों से महाघोर अग्नि बरसाने लगे! इसी तरह कई वर्षों तक वृष्टि एकदम नहीं हुई और पृथ्वीवासी सभी तपोधन मुनिजन इसी जनलोक में ब्रह्माजी की रात्रि होने तक रहे। उस समय उस महाकालाग्नि से संपूर्ण जंगल और पहाड जल गये। इस प्रकार सब कुछ भस्मीभूत हो जाने पर सर्वात्मिक महान् वायु अनेक वर्षों तक बहता रहा। पश्चात् महाकाय मेघ के विशालखण्ड जल से लदे हुए चारों ओर जमने लगे और तत्पश्चात् भीषण मूसलधार वर्षा बहुत काल तक रात-दिन होती रही। अतः महाभूमि द्रवीभूत होकर पाताल को जाने लगी, सातों समुद्र परस्पर मिल गये। और अन्ततः महर्लोक तक को छेंककर चारों तरफ़ जल ही जल भर गया। फिर इसी प्रकार हज़ारों युग तक ब्रह्माजी की रात होगी। (२२-३०)

निशावसाने गोविन्दः सृष्टिस्थित्यन्तकारकः ।। ३० ।।

चतुर्मुखशिवाशक्यं भूमेरुद्धणं हरिः ।
कर्तुकामस्तदा विष्णुर्वटपत्रतले स्थितः ।। ३१ ।।

श्वेतं वराहदेहं च सर्वयज्ञमयं शिवम् ।
अतिभीमं महारौद्रमासाद्य तरसा तदा ।। ३२ ।।

प्रविश्य जलमध्यं तु क्षोभयामास वै तदा ।
संवर्तमेघनिर्घातबृंहितं च वहन् मुहुः ।। ३३ ।।

प्रविवेश महापोत्री पातालं जलपूरितम् ।

**अन्ततः** रात्रि के अवसान हो जाने पर सृष्टि-स्थिति-संहार के करनेवाले गोविंद भगवान वटपत्र पर स्थित होकर चतुर्मुख तथा शिवजी को भी अशक्य पृथ्वी का उद्धार करने की कामना करने लगे। महा भयंकर, महा विशाल, सर्वयज्ञमय, परममङ्गलमय, श्वेतवाराह की देह अति शीघ्र धारण करके जल में प्रवेश किया और सम्पूर्ण जल को क्षोभित कर दिया तथा प्रलयकाल के संवर्तमेघमाला के समान गर्जन करते हुए महावराह श्री भगवान् ने जलपूर्ण पाताल में प्रवेश किया। वहाँ सम्पर्ण रसातल में ढूंढा। (३२-३४)

## हिरण्याक्षवधनिरूपणम्

अन्वेषयामास तदा रसातलमशेषतः ।। ३४ ।।

तत्र युद्धं महाघोरं हिरण्याक्षसमाश्रयम् ।
अभूदभूतपूर्वं च तुमुलं रोमहर्षणम् ।। ३५ ।।

चिरकालं च बाहुभ्यां मल्लयुद्धमवर्तत ।
ततः क्रुद्धो महापोत्री दंष्ट्राग्रेण महासुरम् ।। ३६ ।।

द्विधा तं पाटयामास मेरुतुल्यमहोन्नतिम् ।

एवं वही हिरण्याक्ष के साथ महाघोर अपूर्व तुमुल तथा परम लोमहर्षण युद्ध हुआ। बहुत दिनों तक बाहु से मल्लयुद्ध होता रहा। तब उस महावराह श्री भगवान ने क्रोधित होकर दंष्ट्राग्र से मेरुपर्वततुल्य उस महासुर के दो विभाग कर उसे चीर डाला। उसके रक्त के बहने से संपूर्ण जलराशि लाल हो गयी। (३५-३७)

तद्रक्तं संप्लवेनैव तज्जलं रक्तमाबभौ ।। ३७ ।।

तद् दृष्ट्वा मुनयः सर्वे जनलोकनिवासिनः ।
महज्जलमिदं रक्तमद्भुतं किमिदं भवेत् ? ।। ३८ ।।

इत्याश्चर्यविलोलाक्षाः समाधिध्यानयोगतः ।

जब लोक में रहनेवाले सभी मुनि महा जलराशि का अद्भुत लाल होते हुए देखकर तथा अत्यन्त आश्चर्यान्वित हो समाधि एवं ध्यान योग दृष्टि द्वारा देखने से श्वेतवराह का प्रभाव जानकर स्तुति करने लगे। (३८-३९)

ज्ञात्वा श्वेतवराहस्य प्रभावं मुनयोऽस्तुवन् ।। ३९ ।।

ततः श्वेतवराहश्च पातालतलगामिनीम् ।
दंष्ट्राग्रेणैव तां भूमिं सर्वसत्त्वसमाश्रयाम् ।। ४० ।।

उद्धृत्य तरसा पोत्री विक्षोभ्य च महज्जलम् ।
निधाय पादं शेषस्य भोगोपरि महाप्रभुः ।। ४१ ।।

जनलोकं समाश्रित्य तस्थौ पर्वतसन्निभः ।

ब्रह्मादयो देवगणाः सिद्धाश्च परमर्षयः ।। ४२ ।।

अस्तुवन् वेदमन्त्रैश्च स्तोत्रैश्च विविधैः परैः ।
ववर्षुः पुष्पवर्षाणि ननृतुश्चाप्सरोगणाः ।। ४३ ।।

देवदुन्दुभयो नेदुर्वीणामुरजमर्दलाः ।

तब श्वेतवराह ने उस पाताल तल में गयी हुई सभी सत्रों से समाश्रित पृथ्वी को दन्ताग्र से निकालकर तथा महाजल राशि को विक्षब्ध कर, शेषनाग के फण पर लात रखते हुए जनलोक में लाकर पर्वत के समान ठहरा दिया। ब्रह्मादि देवतागण, सिद्ध तथा महर्षिगण, नाना प्रकार के स्तोत्र तथा वेदमंत्रों से स्तुति करने लगे तथा पुष्पवर्षा की गयी। अप्सराएँ नाचने लगी। देव दुन्दुभी (नगाड़ा), वीणा, मुरज, मर्दल आदि भाँति-भाँति के बाजे बजाने लगे। (४०-४४)

**देवा ऊचुः—**

जय देव महापोत्रिन् ! जय भूमिधराच्युत ! ।। ४४ ।।

हिरण्याक्षमहारक्षोविदारणविचक्षण ।
त्वमनादिरनन्तश्च त्वत्तः परतरो न हि ।। ४५ ।।

त्वमेव सृष्टिकालेऽपि विधिर्भूत्वा चतुर्मुखः ।
सृजस्येतज्जगत्सर्वं पासि विष्णुः समन्ततः । ।। ४६ ।।

कालाग्निरुद्ररूपी च कल्पान्ते सर्वजन्तुषु ।
अन्तर्यामी भवान् देव ! सर्वकर्ता त्वमेव हि ।। ४७ ।।

निष्कृष्टं ब्रह्मणो रूपं न जानन्ति सुरास्तव ।
प्रसीद भगवन् विष्णो ! भूमिं स्थापय पूर्ववत् ।। ४८ ।।

सर्वप्राणिनिवासार्थमस्तुवन् विबुधव्रजाः ।

**देवताओं ने कहा**—हे महा पोत्री भगवान आपकी जय हो। हे पृथ्वी के उद्धार करनेवाले, हिरण्याक्षमहाराक्षस के विदारण में कुशल, आपकी जय हो।

आप अनादि हैं। आप से बड़ा कोई नहीं हैं। आप सृष्टिकाल में ब्रह्म होकर सृष्टि रचते हैं तथा विष्णु होकर पालन करते हैं और कल्पान्त में कालाग्नि रूप महारुद्र होकर संहार करते हैं। हे भगवान आप ही अन्तर्यामी हैं, आप ही सब कुछ करनेवाले हैं। परब्रह्म से ही निकले हुए आपके रूप को देवगण भी नहीं जानते। हे भगवन! विष्णो! आप प्रसन्न होकर पूर्ववत भूमि की स्थापना कर दें। एवं नाना प्रकार से देवताओं ने सभी प्राणियों के निवास के लिये प्रार्थना की। (४५-४८)

इति श्री वराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये श्वेतवराह कृत
हिरण्याक्षवधनिरूपणं नाम त्रयस्त्रिंशोध्यायोऽत्र प्रथमः।

## द्वितीयोऽध्यायः

## वैकुण्ठाद्भगवत्क्रीडाचलानयनम्

**सूत उवाच—**

ततः श्वेतवराहश्च स्थापयित्वा धरां तदा।
विभज्य सागरान् सप्त लोकान् सप्त च पूर्ववत्॥ १॥

चतुर्मुखं समाहूय 'सृज पूर्वं यथा जगत्'।
इत्युवाच महाक्रोडः सर्वयज्ञमयो हरिः॥ २॥

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।
धरा वराहदेवोऽपि लोकानुग्रहकाम्यया॥ ३॥

निज निवास-हित दिव्य थल, क्रीडाचल को जान।
लाकर महि पर धरन हित, भेज्यो गरुड महान॥ १॥

जाकर श्री वैकुण्ठ में, दृश्य अनन्त अनूप।
देखा श्री विहगेश ने, क्रीडागिरि हरि रूप॥ २॥

नारायण गिरि को लिये, महा वेग से आय।
थाप्यो प्रभुहित ताहि महिं, प्रभुरज माथ लगाय॥ ३॥

# वैकुण्ठ से भगवान् के क्रीडापर्वत लाने की कथा

**श्री सूतजी बोले**—उपरोक्त काम हो जाने पर श्री श्वेतवराह महाक्रोड तथा सर्वयज्ञमय भगवान ने पृथिवी की स्थापना करके, समुद्रों, पर्वतों तथा लोकों को सात-सात विभागों में पूर्ववत् विभाग कर के चतुर्मुख ब्रह्माजी को बुलाया और पूर्ववत् सृष्टि करने के लिये आज्ञा दी। तदनुसार ब्रह्माजी ने सूर्य, चन्द्रमा की यथापूर्व रचना की। (१-३)

भूमौ स्थातुं स्थलं दिव्यं बुद्धया निश्चित्य माधवः ।
गरुडं प्रेषयामास गिरिमानेतुमद्भुतम् ॥ ४ ॥

'वैनतेय ! महासत्त्व ! गच्छत्वमतिवेगतः ।
गत्वा तु परमं धाम क्रीडाचलमिहानय ॥ ५ ॥

सर्वान् पारिषदांश्चापि विष्वक्सेनमुखान् सुरान्' ।
इत्युक्तो गरुडः साक्षादुत्पपात विहायसम् ॥ ६ ॥

वराह का रूप धारण किये हुए भगवान माधव ने संसार की कल्याण-कामना से पृथिवी ही पर रहने के लिए दिव्य स्थान मन में निश्चय कर अत्यन्त अद्भुत पर्वत को लाने के लिए गरुडजी को भेजकर कहा—'हे महासत्त्व गरुड, तुम परम धाम को बहुत वेग से जाकर क्रीडाचल पर्वत को यहाँ ले आओ। और विष्वक्सेन आदि सहित सभी परिषद्वर्ग को भी यहाँ ही ले आओ। यह सुनकर गरुड जी आकाश में उड़े। (४-६)

गते तु गरुडे तस्मिन्नानेतुं पर्वतोत्तमम् ।
पोत्रिरूपी हरिर्भूमिं स्थापयित्वा च पूर्ववत् ॥ ७ ॥

पद्भ्यां भूमिं समाक्रम्य गोमतीतीरमागतः ।
तस्यास्तु दक्षिणे भागे षष्ठियोजनदूरतः ॥ ८ ॥

पूर्वाब्धेः पश्चिमे भागे पञ्चभिर्योजनैर्युते ।
देशे पुण्यजनाकीर्णे रुक्मनद्यास्तथोत्तरे ॥ ९ ॥

आगत्य तस्थौ देवोऽपि गरुडागमनोन्मुखः ।

पर्वत लाने को गरुड जी के चले जाने पर श्रीवराहरूप भगवान पैदल ही रास्ता तयकर गोमती नदी के तट पर आये। उसके दक्षिण भाग में साठ योजन दूर पर तथा पूर्व समुद्र से पाँच योजन पश्चिम रुक्मा नदी के उत्तर में पुण्यजनों से समकीर्ण प्रदेश में आकर गरुड जी के आने की प्रतीक्षा में ठहर गये। (७-९)

वैनतेयोऽपि परमं धाम गत्वा ददर्श ह ॥ १० ॥
अप्राकृतममेयं च सर्वरत्नमयं गिरिम् ।
हिरण्मयमहाशृङ्गं पञ्चोपनिषदात्मकम् ॥ ११ ॥
पुन्नागचम्पकाशोकतालहिन्तालशोभितम् ।
सुरद्रुमप्रमुखैर्वृक्षैरन्यैः काञ्चनरूपकैः ॥ १२ ॥
शोभितं पक्षिसङ्घैश्च शुककोकिलहंसकैः ।
श्रवणानन्दजनकमधुरालापसंभ्रमैः ॥ १३ ॥
मल्लिकामालतीभिश्च नन्द्यावर्तादिभिस्तथा ।
लताभिः पुष्पिताग्राभिर्दिव्यसौरभशालिभिः ॥ १४ ॥
सिंहशार्दूलमातङ्गशरभक्रोडवानरैः ।
शोभितं किन्नरीभिश्च गायत्किन्नरपङ्क्तिभिः ॥ १५ ॥
अनेकनिर्झराकीर्णं मानसाह्लादकारकम् ।
मुक्तैर्नित्यैः कामरूपैर्नानारूपैश्च सेवितम् ॥ १६ ॥
नारायणगिरिं नाम्ना क्रीडाद्रिं परमेष्ठिनः ।
योजनत्रयविस्तारं त्रिंशद्योजनमायतम् ॥ १७ ॥
शेषाकारं हरेः शेषं शेषिणं सर्वदेहिनाम् ।

इधर गरुड जी ने भी जाकर परमधाम को एकदम अप्राकृत तथा सब रत्नों से परिपूर्ण; स्वर्णमय ऊँचे-ऊँचे शिखरयुक्त; उपनिषदों में सर्वश्रेष्ठ जो पांच उपनिषद हैं, उनके स्वरूप, पुंनाग, चम्पा, अशोक, ताड, हिंताल-अत्यन्त मनोहर-मनोहर देवदारु आदि नाना भांति के सुवर्णमय सुन्दर वृक्षों से परिपूर्ण; शुक, कोकिल कलहंस आदि सुन्दर, सुमधुर, सुनने में आनन्ददायक आलाप, तान, गान,

गुंजान कूक से मनोमुग्धकारी अनन्त पक्षियों से शोभित ; मल्लिका, मालती, वेला, जूही इत्यादि फूलों से लदे हुए ; दिव्य सुगन्धि फैलानेवाली लताओं से सज्जित ; सिंह शार्दूल मतवाले हाथी, गैंडे, और बंदरों से परिव्याप्त, गाते हुए किन्नर तथा किन्नरियों की पंक्तसि सुशोभित, अनन्त झरने, सोते, मन को आनन्द देनेवाले नाना भांति के रूप में अनेक मुक्त महात्माओं से सेवित, नारायणगिरि नामक परमात्मा का—जिसका विस्तार तीन योजन चौडा और तीस योजन लम्बा था और जो सब शरीरधारियों के आत्मस्वरूप भगवान का शरीर, श्री शेषनाग के आकार का अत्यन्त दिव्यरूप, महापुण्यदायक, दर्शकों के मोक्षदायक-क्रीडा पर्वत देखा । (१० १७)

दिव्याकारं महापुण्यं पश्यतां मोक्षदायकम् ।। १८ ।।

एवंरूपं गिरिश्रेष्ठं स्कन्धदेशे निधाय तम् ।
परिवारैरुपेतं च भगवत्परिचारकैः ।। १९ ।।

आजगाम महावेगाद्गरुडः काञ्चनप्रभः ।

ऐसे गिरिश्रेष्ठ को भगवान् के सब परिवारक और सब गणों के सहित अपने कंधे पर रख सुवर्ण की चमकवाले गरुड जी भयंकर वेग से आ पहुँचे । (१८-१९)

ततः ससंभ्रमो वायुरुदभूच्च विहायसि ।। २० ।।

धुन्वन्वृक्षांस्ततो भूमौ सूर्यकोटिरिवाऽबभौ ।
तेजोरूपस्ततः श्रीमानागतो विष्णुवाहनः ।। २१ ।।

आगतं गरुडं वीक्ष्य स्थापयेह खगेश्वर !
इत्युवाच हरिः सोऽपि स्थापयामास तं तथा ।। २२ ।।

ततो गिरिं समारुह्य श्वेतपोत्री हरिः स्थितः ।

इससे आकाश में वायु पूर्णरूप से चलने लगा। तेजरूप विष्णुवाहन श्री गरुडजी पङ्खों को हिलाते हुए भूमि पर आते हुए कोटि सूर्य के समान प्रकाशित हुए, गरुड को देखकर परमात्माने कहा, तुम इसे यहाँ स्थापित कर दो। तदनुसार उन्होंने उस पर्वत को स्थापित कर दिया । (२०-२२)

स्वामिपुष्करिणीतीरे पश्चिमे पुण्यकानने ।। २३ ।।

विमाने विमले दिव्ये कोटिसूर्यसमप्रभे ।

अनेकरत्नखचितगोपुरायुतशोभिते ।। २४ ।।

रत्नस्तम्भसमोपेतश्रीमहामणिमण्डपे ।

शङ्ख चक्र गदाधारी श्रीनिवास देवाधिदेव भगवान उस पर्वत पर स्वामि पुष्करिणी के तीर, पुण्य वन के पश्चिम भागस्थ दिव्य विमान स्वरूप करोडों सूर्य्य के समान चमकवाले पिरोये हुए अनन्त नवरत्नों से शोभित, कथनातीत, नयनानन्द कारक रत्नों के बने हुए स्तम्भयुक्त, महामणि सहित, प्रकाण्ड एवं विचित्र मण्डप में रहने लगे। (२३-२४)

वाचामगोचरे सर्वनयनानन्दकारके ।। २५ ।।

ततो जातु तटे स्वामिपुष्करिण्यास्तु दक्षिणे ।

मध्ये विमानं पद्माक्षः श्रीनिवासः परात्परः ।। २६ ।।

अतिष्ठद्देवदेवोऽपि शङ्खचक्रगदाधरः ।

फिर कदाचन श्री स्वामि पुष्करणी के दक्षिण भाग में विमान के बीच कमलनयन परात्पर शङ्खचक्र गदाधारी भगवान श्रीनिवास, जो देवताओं के भी देवता हैं, विराजमान थे। (२५-२६)

इति श्रीवराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये वैकुण्ठात्

क्रीडाचलानयननिरूपणं नाम चतुस्त्रिंशोऽध्यायः

अत्र द्वितीयः ।

## तृतीयोऽध्यायः

## देवादिकृतश्वेतवराहप्रार्थना

तत्र देवाः सगन्धर्वा ब्रह्माद्या मुनयोऽपि च ।
आजग्मुर्लोकपालाश्च शङ्करः पार्वतीप्रभुः ।। १ ।।
ऋषयः सप्त वसवो रुद्रादित्या मरुद्गणाः ।
तुष्टुवुश्च हृषीकेशं वासुदेवं जगत्प्रभुम् ।। २ ।।

सनकादि सिद्ध महेश ब्रह्मलोक पालादिक सभी ।
यों उग्र अद्भुत रूप प्रभुवर का न देखा था कभी ।। १ ।।
हो विकल अति भयभीत सबने विनय की अति प्रेम से ।
परमेश ! सौम्य स्वरूप धारण कीजिये शुचि नेम से ।। २ ।।
स्तुति तुष्ट प्रभु धर सौम्य वपु निज प्रिय निवास गिरीश ही ।
कृत सूत पुण्य पवित्र-सलिला स्वामि पुष्कर दिव्य ही ।। ३ ।।
पूरक सकल मनकाम का कर घोष अन्तर्हित हुये ।
माहात्म्य अद्भुत अकथ अगणित भांति बहु वर्णित भये ।। ४ ।।

## देवादिकृत श्वेतवराह प्रार्थना

ब्रह्मादि देवतागण, गन्धर्वगण, मुनिगण लोकपाल, पार्वतीपति श्री शंकर भगवान्, सप्तर्षिगण तथा रुद्रादि मरुद्गण उसी जगह आकर जगत्प्रभु हृषीकेश भगवान वासुदेव की स्तुति करने लगे । (१-२)

'जय लक्ष्मीश ! लोकेश ! जय भूमिधराच्युत ! ।
जय विष्णो ! हिरण्याक्षविध्वंसनविचक्षण ! ।। ३ ।।
द्रंष्ट्राकरालवदन ! भृकुटीकुटिलेक्षण ! ।
भयङ्करमिदं रूपमत्युग्रं घोरदर्शनम् ।। ४ ।।

ज्वलदस्त्रभुजानेकपार्श्वद्वयविराजितम् ।
दृष्ट्वा तद् व्यथिताः सर्वे सुराश्च परमर्षयः ।। ५ ।।

अनुग्रहीतुं लोकान्वै त्वयाऽत्र स्थीयतां गिरौ ।
भयङ्करं त्वदीयं वै रूपमद्भुतदर्शनम् ।। ६ ।।

तद् दृष्ट्वोद्विग्नहृदया भवेयुरदृढा नराः ।
देवतानां मनुष्याणां वासार्थं चोद्धृता धरा ।। ७ ।।

तस्मान्मनुजरक्षार्थं सौम्यरूपं हि धारय ।
ध्यानयोगेष्वशक्तानामशक्तानां च कर्मसु ।। ८ ।।

अस्माकं मनुजानां च स्त्रीशूद्राणां तथैव च ।
दृश्यस्त्वं वरदो भूत्वा वस नित्यमिहैव भोः' ।। ९ ।।

हे लक्ष्मीपते ! त्रैलोक्य के स्वामी ! पृथिवी को धारण करनेवाले ! हे अच्युत । आपकी जय हो । हे विष्णु ! हे हिरण्याक्ष के विध्वंस करने में चतुर, कराल दांत और मुखवाले, वक्र भौंह से टेढ़ी दृष्टिवाले आपकी जय हो । अत्यन्त उग्र महा विकट, महा भयंकर, ज्वलन्त अस्त्रयुक्त, अनेक भुजा-मण्डित, तथा महा भयानक आपके रूप को देखकर सभी देवता और ब्रह्मर्षि बहुत भयभीत और चिन्तित हुए हैं, अत एव आप संसार के कल्याणार्थ इसी पर्वत पर रहिये । आपके इस भयंकर अद्भुत रूप को देखकर सभी पुरुष अत्यन्त उद्विग्न और अधीर हो गये हैं। आपने देवता तथा मनुष्यों को रहने के लिए ही इस पृथ्वी का उद्धार किया है, अत एव मनुष्यों के रक्षार्थ आप शांत रूप ही धारण करें । ध्यान योगों में अशक्त तथा कर्मों में एकदम असमर्थ हम लोगों को, देवताओं को, और मनुष्यों, स्त्रियों एवं शूद्रों को आप दर्शन देकर वर प्रदान करते हुए इसी स्थान में ही सदा निवास करें । (३-९)

इत्युक्तस्तैः प्रसन्नात्मा सौम्यरूपी चतुर्भुजः ।
श्रीभूमिसहितस्तस्थौ पुण्डरीकनिभेक्षणः ।। १० ।।

शरत्पूर्णेन्दुवदनः सर्वाभरणभूषितः ।
श्रीनिवासः सुरान् सर्वान् समाहूयेदमब्रवीत् ।। ११ ।।

'वैकुण्ठात्परमो ह्येष वेङ्कटाख्यो नगोत्तमः ॥
अत्रैव निवसाम्येव श्रीभूमिसहितो ह्यहम् ॥ १२ ॥

यह सुनकर कमलाक्ष शरत्कालीन चन्द्रमा के समान मुखवाले सब सद्भूषणों से अलंकृत प्रसन्नात्मा चतुर्भुज भगवान् सौम्य अथवा शांतरूप धारण कर लक्ष्मी एवं पृथ्वी के साथ निवास करते हुए, सब देवताओं को बुलाकर कहने लगे कि हे सुरवृन्द ! वेंकट नाम का यह पर्वत वैकुण्ठ से भी बढ़कर एवं सब पर्वतों में श्रेष्ठ है, अतः यहाँ ही लक्ष्मी तथा पृथ्वी के साथ निवास करते हुए सभी प्रार्थी मनुष्यों को सदा मनोभिलषित अर्थ देता रहूँगा । (१०-१२)

ददामि प्रार्थितानर्थान्मनुजेभ्यः सदा सुराः' ।
इत्युक्त्वा त्रिदशान्सर्वान्ब्रह्मेन्द्रप्रमुखानपि ॥ १३ ॥

यथार्हं समनुज्ञाप्य तत्रैवान्तरधीयत ।
देवाश्च मुनयः सर्वे प्रतिजग्मुः स्वकालयान् ॥ १४ ॥

इस प्रकार योग्यतानुसार ब्रह्मादि देवतागण को आज्ञा देकर भगवान उसी स्थान में अन्तर्धान हो गये और सब देवता और मुनिजन अपने-अपने स्थान पर लौट गये । (१३-१४)

## स्वामिपुष्करिणीमाहात्म्यम्

**मुनय ऊचुः—**

'सूत ! पूर्वं गिरौ तस्मिन् 'स्वामिपुष्करिणी' ति वै ।
प्रसङ्गात्कथिता सा तु कीदृशी मुनिसत्तम ! ।
गिरेस्तस्याश्च माहात्म्यं वक्तव्यं भवतानघ'! ॥ १५ ॥

**मुनियों ने कहा**—हे मुनिश्रेष्ठ सूतजी ! आपने पूर्व प्रसङ्ग में ही उसी पर्वत पर स्वामि पुष्करिणी का प्रसङ्ग कहा था । हे मुनिश्रेष्ठ, वह पुष्करिणी कैसी है, उसका क्या माहात्म्य है—वह सब मुझे कहिये । (१५)

**सूत उवाच—**

मुनयः श्रूयतां किञ्चिदुत्तरं सावधानतः ।

स्वामिपुष्करिणी पुण्या सर्वपापप्रणाशिनी ।। १६ ।।

वैकुण्ठाद् भगवत्क्रीडा वापी श्रीभूमिलालिता ।
अप्राकृतजलौघा च सुगन्धा सुमनोहरा ।। १७ ।।

गङ्गादि सर्वतीर्थानां जन्मभूमिः शुभोदका ।
आनीता वैनतेयेन क्रीडार्थं तत्र तिष्ठति ।। १८ ।।

विरजावद्रजोदोषप्रमुखाघविनाशिनी ।
स्वर्णस्तेयसुरापानदोषप्रमुखनाशिनी ।। १९ ।।

ऐहिकार्थप्रदा नित्यं स्नानमात्रेण सर्वदा ।
दर्शनात्स्पर्शनात्पानात्स्मरणात्सर्वसिद्धिदा ।। २० ।।

स्नानादिष्टप्रदा चेति किमु वक्तव्यमञ्जसा ।
ततस्तस्यास्तु माहात्म्यं वक्तुं देवोऽपि न प्रभुः ।। २१ ।।

**सूत जी बोले**—हे मुनियो ! आप कुछ सावधान होकर इसका उत्तर सुनिये । यही स्वामिपुष्करिणी सब पापों को नाश करनेवाली, परम पुण्यप्रदायिनी श्रीलक्ष्मीदेवी तथा श्री पृथ्वीदेवी को परम प्रिय, अप्राकृत जल से परिपूर्ण, अत्यन्त सुगन्धित तथा मनोहारिणी, तथा गंगा आदि सब तीर्थों की जन्मभूमि वैकुण्ठस्थ श्री भगवान की क्रीडावापी है । यह गरुड जी द्वारा भगवान के क्रीडार्थ यहाँ ही स्थिर हो रही है । विरजा नदी के समान ही शुद्ध जल से भरी स्वामिपुष्करिणी मल दोष आदि अनन्त पापपुञ्जों को नाश करनेवाली तथा केवल स्नानमात्र ही से मनोवाञ्छा की सदा पूर्तिकरनेवाली है । इसके दर्शन स्पर्शन अथवा स्मरणमात्र ही से सभी सिद्धियाँ प्राप्त हो जाती हैं । स्नान करने पर यह इष्ट सिद्धि देती है, इसमें तो कहने की कोई आवश्यकता ही नही । अत एव उस माहात्म्य का वर्णन करने में देवता भी असमर्थ हैं । (१६-२१)

देवेभ्यस्तत्समीपस्था मनुजा भाग्यशालिनः ।
किन्तु जानन्ति तस्यास्तु वैभवं नैव मानुषाः ।। २२ ।।

प्राकृताचलवद्भाति मानुषाणामयं गिरिः ।
तथापि तेषां भक्तिस्तु शुद्धा भवति तद्गिरौ ।। २३ ।।

यस्य यस्य यथा भक्तिस्तस्य सिद्धिश्च तादृशी ।

उसके तीर में रहनेवाले मनुष्य देवता से भी परम भाग्यशाली हैं। परन्तु मनुष्य उसके विभव को कुछ नही जानते! यहाँ का यह पर्वत उनको प्राकृत पर्वत ही के समान मालूम होता है, तो भी उनकी भक्ति इस पर्वत के विषय में शुद्ध रहती है। इसके विषय में जिसकी जैसी भक्ति रहती है, वैसी ही उसको सिद्धि भी मिलती है। (२२-२३)

स्वामिपुष्करिणीस्नानं सद्गुरोः पादसेवनम् ।। २४ ।।

एकादशीव्रतं चापि त्रयमत्यन्तदुर्लभम् ।
दुर्लभं मानुषं जन्म दुर्लभं तत्र जीवनम् ।। २५ ।।

स्वामिपुष्करिणीस्नानं त्रयमत्यन्तदुर्लभम् ।
अतस्तस्यास्तु माहात्म्यं वक्तुं शेषोऽपि न प्रभुः ।। २६ ।।

स्वामि पुष्करिणी में स्नान, सद्गुरु की चरण सेवा तथा एकादशीव्रत यह तीनों अत्यन्त ही दुर्लभ हैं। संसार में मनुष्य-जन्म ही दुर्लभ, तिस पर जीवन तो और भी दुर्लभ है और उसपर भी स्वामिपुष्करिणी तीर्थ-स्नान तो दुर्लभाति दुर्लभ है। अत एव उसका माहात्म्य श्री शेषजी भी वर्णन करने में असमर्थ हैं। (२४-२६)

यत्तु स्वामिसरः स्नानं महापातकनाशनम् ।
तच्चापि दृष्टं बहुधा तारकासुरसूदने ।। २७ ।।
प्रायश्चित्तप्रवृत्तानां नराणां सुलभा त्वियम् ।
स्वामिपुष्करिणी पुण्या तथा काम्यप्रदायिनी ।। २८ ।।

स्वामि पुष्करिणी में स्नान करना महा पाप नाशक है, यही बात तारकासुर को नाशकरनेवाले भगवान श्री कार्तिकेयजी में बहुधा प्रत्यक्ष है। जो मनुष्य प्रायश्चित्त करना चाहे उसके लिये यह पुण्यशील तथा सर्वफलदायिनी स्वामि-पुष्करिणी ही परम सुलभ उपाय है। (२७-२८)

वेङ्कटाद्रेर्विशेषेण दर्शनं यच्च वर्तते ।
नित्यं नैमित्तिकं काम्यं प्रायश्चित्तं च तद्भवेत् ।। २९ ।।

'विष्णोः कर्माणि पश्येति' श्रुतिरेषा सनातनी ।
नैमित्तिकं तत्कुर्वीत स्वामिपुष्करिणीतटे ॥ ३० ॥

अङ्गवैकल्यदोषाश्च न स्युः स्वामिसरस्तटे ।
वासवादिष्वमोघं च दृष्टं कर्माऽत्र दृश्यते ॥ ३१ ॥

बहुनेह किमुक्तेन धर्मार्थादिफलेषु च ।
वाञ्छावतां मनुष्याणां स्त्रीशूद्राणां च पापिनाम् ॥ ३२ ॥

साङ्गकर्मक्रियाऽशक्तनराणां च विशेषतः ।
नान्या गतिर्वेङ्कटाद्रेः सत्यं सत्यं न संशयः ॥ ३३ ॥

विशेषकर जहा पर श्री वेंकटेश्वर के दर्शन ही नित्य नैमित्तिक तथा काम्य एवं प्रायश्चित्त हो जाता है। "विष्णोः कर्माणि पश्चत" यह सनातन श्रुति है। सभी नैमित्तिक कर्म स्वामिपुष्करिणीतीर में करना चाहिये। अङ् वैकल्य आदि कोई भी दोष यहा नहीं होने पाता। इन्द्रादिकों की भी मनोरथ-सिद्धि यहाँ प्रत्यक्ष ही दीख पड़ती है। बहुत अधिक कहने से ही क्या? धर्म अर्थ आदि फलों की इच्छा रखनेवाले स्त्री, शूद्र महापापी मनुष्यमात्र तथा साङ्ग कर्मानुष्ठान में अशक्त प्राणिमात्र को इस वेंकटाचल के सिवाय अन्य गति नहीं है। यह बात सत्य है! सत्य है!! परम सत्य है!!! इसमें कुछ भी संशय नहीं है। (२९-३३)

इति श्री वाराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये देवादिकृत
श्वेतवराहप्रार्थना स्वामिपुष्करिणीमाहात्म्यं चेति
पञ्चत्रिंशोऽध्यायोऽत्र तृतीयः ।

# चतुर्थोऽध्यायः

## क्रीडाद्रिप्रविष्टश्रीवराहदिव्यवैभववर्णनम्

**मुनय ऊचु :—**

परावरज्ञ सर्वज्ञ सर्वभूत हिते रत ! ।
मुने सूत ! महाभाग ! किञ्चित्पृच्छाम तद्वद ।। १ ।।

वराहरूपी भगवान् धरामुद्धृत्य किं पुनः ।
तदैव शेषशैलेन्द्रे न्यवसत् करुणालयः ।। २ ।।

कालान्तरे वा तत्रैत्य स्थितवान् सर्वदा नु किम् ? ।
अकरोद्वाऽथ किं तत्र किं दत्तं कस्य वा त्विति ।। ३ ।।

यह भगवान् वराह नित, करत जीव कल्यान ।
क्रीडाचल क्रीडा करत, रहे तहीं करि थान ।। १ ।।

भगवत आश्रम होत ही, महिमा बढी अनन्त ।
तेहि वर्णन बहुविधि किया, पर नहि ताकर अन्त ।। २ ।।

बहु कारण वश नाम बहु-हुआ प्रसिद्ध नगेश ।
जेहि सेवन से होत हैं, कोटि कोटि अघ शेष ।। ३ ।।

## क्रीडाद्रि प्रविष्ट श्री वराह के दिव्य वैभव का वर्णन

**मुनियों ने कहा :—**पर (वेदादि शास्त्र) अपर (स्मृति, पुराण, इतिहासादि) के जाननेवाले, सब जीवों के हित करनेवाले हे सूतजी, हम लोग कुछ पूछते हैं, उसे आप कृपया बतलाइए। करुणालय वराह रूप भगवान पृथ्वी का उद्धार करके क्या शेषशैलेन्द्र पर ही सदा के लिए रह गये, अथवा दूसरे स्थान को भी गये ? और अगर वहाँ ही रहे तो वहाँ कौन-कौन काम किया ? किन-किन को कौन-कौन पदार्थ दिये ? (१-३)

**सूत उवाच :—**

ब्रवीमि तदशेषं च श्रुणुध्वं मुनिसत्तमाः ! ।
आस्थाय श्वेतपोत्रित्वमुज्जहार धरां यदा ।। ४ ।।
तदैवानाय्य वैकुण्ठादचलं गरुडेन वै ।
कल्पादावेव भगवाँल्लीलारसमहोदधिः ।। ५ ।।
विहरन् रमया सार्धं दरीनिर्झरसानुषु ।
प्रकाशश्चाप्रकाशश्च तिष्ठत्येव सदा गिरौ ।। ६ ।।
यावत्कल्पं वसत्येव प्रोक्तं च परमेष्ठिना ।

तब श्री सूत जी बोले : हे मुनिश्रेष्ठो ! मैं वह सब कहूँगा, आप लोग श्रवण करें। श्री भगवान ने प्रारंभ में ही जब श्वेतवराह रूप धारण किया, तब लीलारस महोदधि वैकुण्ठ से श्री गरुड जी के द्वारा वेंकटाचल मंगाकर उसी पर कल्पपर्यन्त श्रीरमादेवी के साथ नदी, निर्झरों, गुफाओं में कभी व्यक्तरूप से, कभी अव्यक्तरूप से सदैव विहार करते हुए निवास करने लगे। (कल्पांत तक उसी पर्वतपर निवास रहेगा। ऐसा ब्रह्माजी बोले। (४-६)

कदाचित् पुण्यशीलेभ्यो दर्शनं वितरत्यसौ ।। ७ ।।
कल्पे कल्पे च धरणीमुद्धरत्येवमेव हि ।
श्वेतवराहरूपेण धरणीचोद्धृता यतः ।। ८ ।।
श्वेतवाराहकल्पः स्यादाख्यया मुनयो ह्ययम् ।

भगवान् पुण्यशील ऋषियों को दर्शन भी दे दिया करते। इसी प्रकार हर कल्प में भगवान श्वेतवराह के रूप में पाताल से पृथ्वी का उद्धरण करते हैं। इसी प्रकार कभी-कभी वे कल्प सदा श्वेतवराह कल्प के नाम से विख्यात रहते हैं। (७-८)

साधूनां च यदा बाधा धर्मश्चात्यवसीदति ।। ९ ।।
यदात्वधर्मोह्यधिको दुष्टाश्च बलिनो यदा ।
तदा कालानुरूपेण नरदेवादिरूपतः ।। १० ।।

सृष्ट्वात्मानं महाविष्णुः संहरत्यहितांस्तदा ।
अधर्मं सर्वमुत्सार्य सुधर्मं पालयत्यसौ ।। ११ ।।
रक्षत्येव च साधूंश्च वेदविद्याश्च वर्धयन् ।

अब कभी साधुओं पर किसी प्रकार की बाधा पहुँचती है, तथा धर्म की हानी और अधर्मों की वृद्धि होती है, जब-जब दुष्ट लोग भगवान हो जाते हैं, तब-तब समयानुसार मनुष्य, देवादि अनेक रूप से आत्मा को बदल राजा आदि वेष धारण करके श्री महाविष्णु अहितों का संहार कर सभी अधर्मों को निर्मूल कर सद्धर्म को स्थापित करते हैं, एवं वेदविद्या की वृद्धि करते हुए साधुओं की रक्षा करते हैं। (९-११)

स्वयं च सर्वभूतानां दृश्यस्तिष्टति कुत्रचित् ।। १२ ।।
सर्वदा शेषशैलेन्द्रे विहरन् रमया सह ।
नित्यैर्मुक्तैश्च देवैश्च कामरूपैश्च संयुतः ।। १३ ।।
तिष्ठत्येव सदा तस्मिन् वैकुण्ठाख्ये नगोत्तमे ।

वे कहीं-न-कहीं सर्वभूतों को दृश्य होकर विराजमान रहते हैं। भगवान वैकुण्ठ नामक इसी सर्वोत्तम पर्वतपर सदा नित्यमुक्त, ऋषिओं, देवताओं तथा श्री रमा देवी के साथ स्वेच्छा रूप धारण कर विहार करते हैं। (१२-१३)

वैकुण्ठः स्वर्गसूर्येभ्यः स्वगेहेभ्योऽधिकप्रियः ।। १४ ।।
अयं भगवते हृद्यः पर्वतः पुण्यकाननः ।
मन्त्रसिद्धिस्तपः सिद्धिर्यज्ञसिद्धिस्तथैव हि ।। १५ ।।

## क्रीडाद्रेः भगवत्सान्निध्येन महिमाधिक्यवर्णनम्

काम्यस्य कर्मणः सिद्धिरेवमन्याश्च सिद्धयः ।
भवन्त्यत्र नराणां च न हि विघ्नादिकं क्वचित् ।। १६ ।।
अल्पेन तपसाभीष्ठं सिध्यत्यस्मिन् गिरौ वरे ।
सर्वतीर्थानि सततं पुण्यान्यत्रैव सन्ति हि ।। १७ ।।

वैकुण्ठ स्वर्ग से, सूर्य लोकों से और अपने-अपने निवास स्थानों से प्राणिमात्र को अधिक प्यारा है। पुण्यकानन सम्पन्न यह पर्वत तो भगवान का रम्य स्थान है। मन्त्रों, तपों, यज्ञों, तथा काम्यकर्मों, की सिद्धि एवं अन्यान्य सिद्धियाँ यहाँ हीं होती हैं। मनुष्यों को यहाँ किसी तरह का विघ्न नहीं होता है। यहाँ थोड़ी ही तपस्या से अभीष्ठों को सिद्धि हो जाती है। यहाँ पर सभी पवित्र एवं पुण्य तीर्थ रहते हैं। (१४-१७)

य एनं सेवते नित्यं श्रद्धाभक्तिसमन्वितः ।
ज्ञानार्थी ज्ञानमाप्नोति द्रव्यार्थी कनकं बहु ।। १८ ।।
पुत्रार्थी पुत्रमाप्नोति नृपो राज्यं च विन्दति ।
व्यङ्गश्च साङ्गसद्रूपं पशून् धान्यानि विन्दति ।। १९ ।।
यं यं कामयते मर्त्यस्तं तमाप्नोति सर्वदा ।

## क्रीडाद्रेः कारणभेदेनाऽनेकनामानुवर्णनम्

चिन्तितस्य च सिद्धचा तु चिन्तामणिमिमं विदुः ।। २० ।।
केचिद् ज्ञानप्रदत्वाच्च ज्ञानाद्रिरिति तं विदुः ।
सर्वतीर्थमयत्वाच्च तीर्थाद्रिं प्राहुरुत्तमाः ।। २१ ।।
पुष्कराणां च बाहुल्यात् गिरावस्मिन्सरस्सु वै ।
पुष्कराद्रिं प्रशंसन्ति मुनयस्तत्त्वदर्शिनः ।। २२ ।।
गिरावस्मिंस्तपस्तेपे धर्मोऽपि स्वामिवृद्धये ।
तस्मादाहुर्वृषाद्रिं तं मुनयो वेदपारगाः ।। २३ ।।

जो कोई श्रद्धा एवं भक्ति से इस पर्वत की नित्य सेवा करता है वह ज्ञान का अभिलाषी ज्ञान, द्रव्यार्थी द्रव्य, अनन्त सुवर्ण, पुत्रार्थी पुत्र, राज्यार्थी राज्य, अंग-भंगवाले सुन्दर रूप, पशु, धन धान्य—सब कुछ पा लेता है। मनुष्य जो जो कामना करे वह सभी पाता है।

इस पर्वत पर सिद्धियों के चिन्तन मात्र से ही लाभ होने से यह चिन्तामणि कहा जाता है—ज्ञान प्रदान करने के कारण ज्ञानाद्रि, सभी तीर्थमय होने से तीर्थाद्रि तथा अनन्त रमणीय पुष्करों के रहने के कारण पुष्कराद्रि आदि नामों से इसे तत्त्व-

दर्शी मुनिगण पुकारा करते हैं तथा अपनी वृद्धि के लिये धर्म भी यहाँ तपस्या करता है, अत एव वेदपारंगत मुनिवर्गों ने इसे वृषाद्रि नाम से गाया है। (१८-२३)

शातकुम्भ स्वरूपत्वात्कनकाद्रिं च तं विदुः ।
द्विजो नारायणः कश्चित्तपः कृत्वा महत्पुरा ।। २४ ।।

ऐच्छदस्य स्वनाम्ना च व्यपदेशं मुरारितः ।
तस्मान्नारायणाद्रिं तं विदुरुत्तमपूरुषाः ।। २५ ।।

वैकुण्ठादागतत्वेन वैकुण्ठाद्रिरिति स्मृतः ।
हिरण्याख्यविनाशाय प्रह्लादानुग्रहाय च ।। २६ ।।

नारसिंहाकृतिर्जज्ञे यस्मादस्मात्स्वयं हरिः ।
सिंहाचल इति प्राहुस्तस्मादेनं मुनीश्वराः ।। २७ ।।

अञ्जना च तपः कृत्वा हनूमन्तमजीजनत् ।
तदा देवाः समागत्य देवसाहाय्यकारकम् ।। २८ ।।

यस्मात्पुत्रमसूतासौ जगुस्तस्मादिमं गिरिम् ।
अञ्जनाद्रिं वराहाद्रिं वराहक्षेत्रलक्ष्मतः ।। २९ ।।

नीलस्य वानरेन्द्रस्य यस्मान्नित्यमवस्थितिः ।
तस्मान्नीलगिरिं नाम्ना वदन्त्येनं महर्षयः ।। ३० ।।

सुवर्ण के समान चमक एवं स्वरूप के कारण उसे कनकाद्रि कहते हैं। प्राचीनकाल में नारायण नामक किसी ब्राह्मण ने यहाँ तप करके मुरारि भगवान से अपने नाम पर ही इसकी नाम प्रसिद्धि के लिए प्रार्थना की थी, अतः उत्तम पुरुष इसे तब से नारायणाद्रि भी कहते हैं। यह वैकुण्ठ से आने के कारण वैकुण्ठाद्रि कहलाता हैं। हिरण्यकश्यपु के विनाश तथा प्रह्लाद के ऊपर अनुग्रह के लिए, स्वयं भगवान ने इसपर जब से नरसिंह की आकृति धारण की, तब से इसको सिंहाचल कहते हैं। जब अंजना देवी ने तपकर हनुमान जी को उत्पन्न किया तब सभी देवता आकर देवताओं के सहायक पुत्र हनुमान के जन्म देने के कारण इसे अंजनाद्रि के नाम से पुकारा। वराहक्षेत्र होने के कारण इसे वराहाद्रि नाम से पुकारते हैं। महावीर वानरेन्द्र नील के स्थायी निवास होने के कारण महर्षिगण इसको नीलगिरि कहते है। (२४-३०)

वेङ्काराऽमृतबीजस्तु कटमश्वयमुच्यत ।
अमृतैश्वर्यसङ्गत्वाद्वेङ्कटाद्रिरिति स्मृतः ।। ३१ ।।

यतःकदाचिद्देवानां श्रीनिवास इहाबभौ ।
श्रीनिवासगिरिं प्राहुस्तस्मादेनं दिवौकसः ।। ३२ ।।

आनन्दाद्रिमिमं प्राहुः वैकुण्ठपुरवासिनः ।
प्राहुर्भगवतः क्रीडाप्राचुर्यात्तु तथा सुराः ।। ३३ ।।

श्रीप्रदत्वाच्छ्रियो वासाच्छब्दशक्त्या च योगतः ।
रूढ्या श्रीशैल इत्येवं नाम चास्य गिरेरभूत् ।। ३४ ।।

'वे' कार अमृत बीच है और 'कट' का अर्थ ऐश्वर्य है, अतएव अमृत और ऐश्वर्य के संयुक्त होने के कारण यह वेंकटाद्रि कहा जाता है। किसी समय देवादि देव श्रीनिवास इस स्थान पर विराजमान थे, अतः इसको देवताओं ने श्रीनिवासाद्रि कहा। भगवान का क्रीडा-स्थान एवं आनन्द धाम होने के कारण वैकुण्ठ में रहने-वालों ने इसका नाम आनन्दाद्रि रखा। धन एवं शोभा देने के कारण तथा लक्ष्मीजी के वास-स्थान होने के कारण रूप एवं शब्द शक्ति के योग से 'श्रीशैल' ऐसा इसका नाम हुआ। (३१ ३४)

बहूनि चास्य नामानि कल्पभेदाद्भवन्ति हि ।
यावदुक्ता भगवतः कल्याणगुणराशयः ।। ३५ ।।

तावन्तोऽस्य गिरेः सन्ति गुणाः परमपावनाः ।

कल्प भेद से इसके अनेकों नाम पड़ते जाते हैं। जितने कल्याण एवं गुण की राशियाँ श्री भगवान में हैं उतने ही इस पर्वत के भी परम पवित्र गुण हैं। (३५)

अस्य वेङ्कटशैलस्य माहात्म्यं यावदास्ति हि ।। ३६ ।।
तावद्वक्तुं च कार्त्स्न्येन न समर्थश्चतुर्मुखः ।
षण्मुखश्च सहस्रास्यः फणी देवाः परे किमु ? ।। ३७ ।।

इस वेंकट पर्वत के जितने माहात्म्य है उनको श्री चतुर्मुख ब्रह्माजी भी कहने में असमर्थ हैं। षण्मुख कार्तिकेयजी, सहस्रमुख शेषजी इत्यादि सभी देवता इसके गुण कथन में असमर्थ हैं। तो औरों की बात ही क्या? (३६,६७)

श्रुत्वा सूतमुखाच्चैवं मुनयो हृष्टमानसाः ।
न तृप्तिमाययुस्ते हि भूयः श्रवणकौतुकात् ।। ३८ ।।

श्री सूतजी के मुख से इसका इस प्रकार गुण-माहात्म्य सुनकर सभी मुनिगण परम हर्षित हो और सुनने की चाह रखते हुए तृप्ति को न पाया। (३८)

इति श्रीवराहपुराणे श्रीवेंकटाचलमाहात्म्ये क्रीडाद्रि प्रविष्ट
श्रीवराहदिव्यवैभवादिवर्णनं नाम षट्त्रिंशोऽध्यायोत्र चतुर्थः ।

## पञ्चमोऽध्यायः

## महर्षियज्ञवाटं प्रति भगवदागमनम्

सूत उवाच :—

'तद्गिरौ कि कृतं तेन वेङ्कटेशेन तद्वद' ।
इत्युक्तं यच्च युष्माभिस्तत्र किञ्चिद्वदाम्यहम् ।। १ ।।
मायिना सर्वशक्तेन लीलापरवशेन च ।
कृतं तु वक्तुं कार्त्स्न्येन केन शक्यं तपोधनाः ! ।। २ ।।
स कदाचिन्महामायी विटवेषं वहन्मुदा ।
गिरावुत्तरदिग्भागे चचार रमया सह ।। ३ ।।

इस पन्चम अध्याय में, यज्ञ वाह का यज्ञ ।
है प्रसन्न शोभित सगण, आये जहं सर्वज्ञ ।। १ ।।
रमा, रमापति ईशको, बदले देखा रूप ।
पूछा परिचय, ब्रह्म ऋषि, उत्तर मिला अनूप ।। २ ।।
पुनि मुनि के अनुरोध से, लक्ष्मी अरु भगवान् ।
यज्ञ भाग को ग्रहण कर, मुनि हिं दियो वरदान ।। ३ ।।
जरा-युक्त द्विजने किया, धार स्नान कुमार ।
हुआ तभी से पुण्य सर, प्रचलित धार कुमार ।। ४ ।।
ब्रह्मण कथन कुमार से, वर्णन महिमा धार ।
सेचन फल आदिक सभी, वर्णित यहाँ विचार ।। ५ ।।

## महर्षियज्ञवाट के पास भगवदागमन

**श्री सूतजी बोले :**—हे मुनिवृन्दो, आपने जो यह पूछा कि श्री वेंकटेश ने उस पर्वत पर क्या-क्या किया उसका कुछ उत्तर में देता हूँ। मायावी सर्वशक्तिमान लीलानिकेतन भगवान ने जो जो लीलाएँ और कृत्य किये हैं उनका सम्पूर्ण

वर्णन कौन कर सकता है? वही मायावी परमात्मा किसी समय ऐथ्याश का रूप धारण कर पर्वत के उत्तर भाग में रमा देवी के साथ विचारण कर रहे थे। (१-३)

तत्र केचिन्महाभागा मुनयस्तत्त्वदर्शिनः ।
गिरेरस्य तु माहात्म्यं श्रुतवन्तस्तपोधनाः ॥ ४ ॥

अयं गिरिर्महापुण्यः सर्वसवसमाश्रयः ।
निर्बाधः फलमूलाढ्यः सर्ववृक्षसमावृतः ॥ ५ ॥

नानाप्रस्रवणोपेतो यज्ञियैश्च महीरुहैः ।
अन्यैस्तापसयोग्यैश्च पादपैरपि सङ्कुलः ॥ ६ ॥

नयनानन्दजनको हृदयाह्लादकारकः ।
अस्माभिः सर्वदा वासः कर्तव्योऽत्र महागिरौ ॥ ७ ॥

इति निश्चित्य मनसा तत्रागत्य तपोधनाः ।
चक्रुर्यज्ञं यथाशास्त्रं विष्णुमुद्दिश्य कौतुकात् ॥ ८ ॥

वही पर कुछ ऋषिगणों ने, जो परमतत्त्वदशी? एवं महाभाग थे, इस पर्वत का माहात्म्य सुनकर यह पर्वत महापुण्यप्रद, सब प्राणियों का आश्रयस्थान, निर्बाध अनन्त फलमूलों से परिपूर्ण, नाना भांति के वृक्षों से समाकीर्ण, तथा अनन्त झरनादि से युक्त, यज्ञ लायक वृक्षों से समाश्रित बड़ें-बड़े तपस्वियों के निवास योग्य वृक्षों से भरा हुआ तथा आँखों एवं हृदयों को आनन्ददायक है। अत एव सर्वदा यही निवास किया जाय—ऐसा निश्चयकर वे लोग उस पर्वत पर आकर यथा साध्य विष्णु के उद्देश से तथा परम उत्कण्ठ से एक महायज्ञ किया। (४-८)

सोऽपि मायी स्त्रिया सार्धं यज्ञवाटमुपागमत् ।
सुवर्णचित्रितं वस्त्रं वसानः शुभदर्शनः ॥ ९ ॥

सोष्णीषश्च करेणैव वामेन छुरिकां दधत् ।
ताम्बूलेन शुचिस्निग्धमन्दस्मितमुखांबुजः ॥ १० ॥

मृगोत्थमदगन्धेन सुरभीकृतदिङ्मुखः ।
पुण्डरीकविशालाक्षः कम्बुग्रीवो महाभुजः ॥ ११ ॥

जगन्मोहनसौन्दर्यः साक्षात्कन्दर्पसन्निभः ।
हेमयज्ञोपवीताङ्गः कोमलाङ्गो मनोहरः ।। १२ ।।
प्रविवेश सभां याज्ञीं मध्येवृन्दं महात्मनाम् ।

महामायावी विष्णुभगवान भी अपनी अर्धाङ्गिनी के साथ यज्ञवाह में आ पहुँचे। उनका वस्त्र सुवर्णतारों से चित्रित था, अतः वे उसको पहनकर अत्यन्त शोभित और दर्शनीय हो रहे थे। पगड्डी पहने तथा बाये हाथ में चाकू धारण किये हुए, पवित्र सुगन्धित ताम्बूल (पान) खाते हुये धीरे-धीरे मुस्कराते हुये मुखवाले कस्तूरी की उत्कट सुगंधि से समस्त दिशाओं को सुगंधित करने हुये, विशाल कमलाक्ष, परम सुन्दर कम्बूग्रीवा एवं विशाल भुजावाले संसार को मोहित करनेवाली शोभा से शोभित, साक्षात् कामदेव की प्रतिमूर्ति के समान, सुवर्ण का यज्ञोपवीत धारण किये हुये, परम सुकुमार, और मनोहर अङ्गवाले देवाधिदेव परमात्मा श्री विष्णु भगवान ने उन महात्माओं की सभा में अथवा यज्ञ सभा में प्रवेश किया। (९-१२)

दृष्ट्वा च मुनयः सर्वे पुण्डरीकनिभेक्षणम् ।। १३ ।।
वेश्यावेषं धारयन्ती लीलाम्बुजकराम्बुजाम् ।
तप्तहाटकसंकाशां पंकजोदरसप्रभाम् ।। १४ ।।
हरिद्रान्तरतुल्याभां दीव्यन्तीं कुटिलालकाम् ।
शरत्पूर्णेन्दुवदनां ताम्बूलेन मनोहराम् ।। १५ ।।
कर्णान्तिनेत्रयुगलां विडंबितरविप्रभाम् ।
अभूतपूर्वसौन्दर्यां साक्षाल्लक्ष्मीमिव स्थिताम् ।। १६ ।।
दृष्ट्वा च मुनयः सर्वे विस्मयोत्फुल्लमानसाः ।
कोऽसौ राजसुतस्त्वेष पृथिवीं भोक्तुमर्हति ।। १७ ।।
द्वात्रिंशल्लक्षणोपेतः साक्षाद्राम इवापरः ।
'किमर्थमागतस्त्वं' तु पृच्छाम इति चाब्रुवन् ।। १८ ।।
आवासः कुत्र ते माता का वा ते जनकः कुतः ।
नामधेयं च किं वा ते ब्रूहि राजन्नशेषतः ।। १९ ।।

कमलाक्ष भगवान को देखकर सब मुनियों ने उनके साथ आयी हुई (लक्ष्मीजी) स्त्री को भी देखा जो वेश्या-वेष में था तथा अपने हस्तकमलों में लीला कमल धारण किया था। वह तपाये हुए सुवर्ण के समान शोभायुक्त थी, केशर के रंग की प्रभा तथा हल्दी की उद्दीप्त प्रभा के समान चमकती थी। वह घुंघराले केश-कलाप से सुशोभित, शरत्काल के पूर्णचन्द्र के समान मुखवाली तथा ताम्बूल से सुशोभित थी। वह कानों के पास तक फैले हुए युगल नेत्रवाली सूर्य की चमक को भी फीकी करती हुई अभूतपूर्व मनोहरतायुक्त साक्षात् श्री लक्ष्मीजी के समान रूप धारण किये हुये थी। इन दोनों को देखकर सभी मुनिवर्ग आनंद से परम प्रफुल्लित हो गये और आपस में कहने लगे कि यह कौन पृथ्वी के शासन करने योग्य राजपुत्र हैं? बत्तीसों लक्षणों से समलङ्कृत ये दूसरे राम के समान मालूम होते हैं। पूछना चाहिए कि यह किसलिये आये हैं? यह सब विचार कर उन लोगों ने उनसे कहा कि हे राजन, आपका निवास-स्थान कहाँ है, आपके माता-पिता कौन हैं तथा आपका नाम क्या है, यह सब अशेष रूप से बतलाइए। (१३-१९)

**श्री भगवानुवाच :—**

'नाहं राजा न वा विप्रः काचिज्जातिश्च नैव मे।
न च माता न च पिता नैवाऽवासश्च कुत्रचित् ।। २० ।।

सर्वावासः सर्वभक्षः सर्वगः सर्वरूपधृक्।
निर्नामा निर्गुणश्चाहं युष्मान्द्रष्टुमिहागतः ।। २१ ।।

भवन्तस्तपसा श्रेष्ठा वेदवेदान्तपारगाः।
वदन्त्वौदुम्बरी सर्वा वेष्टिता व्याघ्रवाससा ।। २२ ।।

स्पृष्ट्वोद्गानं कथं त्वत्र सम्भवेन्मुनयोऽमलाः।
एवमादि क्रियालोपं पृष्टवान्यज्ञसंसदि ।। २३ ।।

तत्पश्चात श्री भगवान कहने लगे हे मुनियों! न मैं राजा हूँ, न ब्राह्मण, न तो मेरी कोई जाति ही है, न मुझे माता, पिता हैं, न मेरा कहीं मकान ही हैं। मेरा वास सभी स्थानों में है, सब कुछ हमारा भक्ष्य है, मैं सब जगह जा सकता हूँ और सबका रूप धारण कर सकता हूँ। मैं निर्नाम एवं निर्गुण हूँ और आप लोगों को ही देखने आया हूँ। आप सब वेद वेदान्त-ज्ञाता, बड़े ही तपस्वी और श्रेष्ठ हैं,

से युक्त शंखचक्रवरायुध धारण किये पुण्डरीकाक्ष, हंसते हुए मुखकमलयुक्त दयामृतसागर, कृपातरङ्ग के कारण, मनोहर एवं मन्दहास्ययुक्त मुखवाले भगवान श्री वेङ्कटेश के दर्शन तथा प्रणाम करके, नामावलि पाठ से स्तुतिकर, कमलों से पूजा कर, अत्यन्त दुर्लभ-दुर्लभ अपने अभीष्ट प्राप्त कर कृतकृत्य हो, पुनः लौट आवे। यह सुनकर मुनियों ने श्री सूतजी की अनुमति लेकर तथा परम आनन्दित होकर प्रस्थान किया। (८-१५)

भरद्वाजः कौशिकश्च जाबालिरथ काश्यपः ।। १६ ।।

क्रतुर्दक्षः पुलस्त्यश्च गौतमः पुलहस्तथा ।
आङ्गीरसो देवलश्च देवदर्शन एव च ।। १७ ।।

कौत्सः कण्वो मृकण्डुश्च शतानन्दो महामुनिः ।
मैत्रेयप्रमुखास्तत्र सङ्गता ये तपोधनाः ।। १८ ।।

घुष्यन्तः सङ्घशश्चोच्चैः गोविन्देति पुनः पुनः ।
तीर्त्वा भागीरथीं पश्चाद्गौतमीं कृष्णवेणिकाम् ।। १९ ।।

तत्र तत्र महानद्यां स्नात्वा स्नात्वा तपोधनाः ।
वेङ्कटाद्रिं समागत्य तप्तजाम्बूनदात्मकम् ।। २० ।।

सर्वतीर्थमयं पुण्यं सर्वसिद्धनिषेवितम् ।
मदमञ्जुलमायूरकेकास्वनमनोहरम् ।। २१ ।।

दिव्यनिर्झरसम्पूर्णं फलपुष्पैर्द्रुमैर्युतम् ।
अनतिक्रम्य सूतोक्तसेवाक्रममिमे बुधाः ।। २२ ।।

चक्रुः श्रीवेङ्कटेशस्य सेवां परमपावनीम् ।

महामुनि भरद्वाज, कौशिक, जाबालि, कश्यप, क्रतु, दक्ष, पुलस्त्य, गौतम, पुलह आंगिरस, देवल, देवदर्शन, कौत्स, कण्व, मृकण्डु, शतानन्द तथा मैत्रेय प्रमुख जितने तपोधन महर्षिवृन्द वहां गये थे, सभी खूब ऊँचे स्वर में 'गोविन्द' ऐसा नाम

का घोष बारम्बार करते हुए भागीरथी पार कर पीछे गौतमी-कृष्णवेणी का आदि उन स्थानों की महानदियों में स्नान कर तप्त स्वर्ण का बना हुआ सर्वतीर्थमय, पवित्र, सभी सिद्धों से सेवित मन्द-मन्द मयूर की ध्वनि से मुखरित, दिव्य झरनापूर्ण, फल, फूल, द्रुमादि से भरा हुआ, परम मनोहर तथा शोभायमान वेङ्कटाद्रि पर आकर, श्री सूतोक्त सेवाक्रम को न छोड़कर श्री वेङ्कटेश की परम पावनी सेवा करने लगे। (१७-२२)

स्नानं मन्त्रैश्च कुर्वन्तो निर्झरेषु सरस्सु च ।। २३ ।।

पश्यन्तस्तानि रम्याणि सानूनि मणिमन्ति च ।
शृण्वन्तः श्रोत्ररम्याणि पक्षिणां वचनान्यपि ।। २४ ।।

गायन्तः सामगानानि पठन्तः स्तुतिसञ्चयम् ।
नृत्यन्तस्सम्भ्रमात्सर्वे क्ष्वेलन्तश्च तपोधनाः ।। २५ ।।

उत्पतन्तः पतन्तश्च हर्षावेशवशं गताः ।
गिरिप्रदक्षिणं सम्यक्कुर्वन्तस्ते शनैः शनैः ।। २६ ।।

स्नात्वा कापिलतीर्थे च दृष्ट्वा नत्वा शिवं गिरिम् ।
आरुह्य मेरुशृङ्गाभं सिद्धगन्धर्वसेवितम् ।। २७ ।।

अत्यद्भुताद्रत्नसानोर्हेमाद्रेरद्भुतो गिरिः ।
अयं ह्यभूतपूर्वो हि श्रीमद्वेङ्कटभूधरः ।। २८ ।।

इति ब्रुवन्तस्ते सर्वे ददृशुर्दिव्यमुत्तमम् ।

उन लोगों ने झरनों तथा तालाबों में मन्त्र पढ़-पढ़ कर स्नान करते-करते ऊँचे-ऊँचे शिखरवाले मणिमय रम्य पर्वतों को देखते देखते कर्णानन्द दायक मधुर चिड़ियों के मीठे गानों को सुनते-सुनते, सामगान गाते-गाते अनेक स्तुति पाठ करते करते, सम्भ्रमवश सभी नाचते-नाचते, लोटते-लोटते आनन्दवश होकर उछलते पड़ते, धीरे-धीरे पर्वत की प्रदक्षिण करते, कपिलतीर्थ में स्नान कर शिवगिरि को देख तथा प्रणाम कर, सिद्धगन्धर्व सेवित मेरु के समान उस पर्वतपर चढ़, अत्यद्भुत

रत्न-सानु हेमाद्रि से भी बढकर अभूतपूर्व श्री वेङ्कटेश भूधर यही है—ऐसा कहते हुए अत्यन्त मनोहर, दिव्य तथा परमोत्तम विमान को देखा। (२४-२६)

विमानं स्वामितीर्थे च स्नात्वा देवं श्रियःपतिम् ।। २९ ।।

कोटिकन्दर्पलावण्यं किरीटमुकुटोज्ज्वलम् ।
उरःस्थितश्रिया कान्तमुक्तादामोपशोभितम् ।। ३० ।।

चतुर्भुजमुदाराङ्गं शङ्खचक्रधरम्परम् ।
नीलमेघनिभं श्यामं पीतवाससमच्युतम् ।। ३१ ।।

श्रीभूमिसहितं विष्णुपद्मार्चितपदाम्बुजम् ।
प्रणेमुः सहसा दृष्ट्वा हर्षोत्फुल्लविलोचनाः ।
तुष्टुवुर्वेदमन्त्रैश्च स्तोत्रैश्च श्रुतिसम्मतैः ।। ३२ ।।

स्वामि तीर्थ में स्नान कर श्रीमति, करोडों कामदेव के लावण्ययुक्त, किरीट-मुकुट से प्रकाशित, वक्षस्थित, श्रीकान्त, मुक्ताहार से शोभित, चतुर्भुज, शंखचक्र धारी, नील मेघ के समान श्याम वर्णवाले, पीताम्बर धारी, श्री भूमि सहित, लक्ष्मी से पूजितपदाम्बुज, श्री विष्णु भगवान को हर्षोत्फुल्ल नयन हो सानन्द प्रणाम किया तथा वेद और श्रुतिसम्मत स्तुतियों तथा मन्त्रों से स्तुति की। (३०-३३)

## अथ महर्षिकृतभगवत्स्तुतिः

**मुनय ऊचुः—**

'यः पार्थिवानि गणयेद्रजांसि सुबहून्यपि ।
विष्णोर्वीर्याणि गणयेन्निःशेषं स पुमान्हरेः ।। ३३ ।।

त्रेधा च निदधे पादान्भूमौ विष्णुस्त्रिविक्रमः ।
धर्माश्च धारयन्यस्तु तस्मै ते विष्णवे नमः ।। ३४ ।।

अत्यतिष्ठद्विश्वतो ये व्याप्य भूमिं दशाङ्गुलम् ।
भूतं भव्यं च यद्व्याप्तं तस्मै ते विष्णवे नमः ।। ३५ ।।

पादो विश्वं त्रिपाद् व्योम यस्य तस्मै नमो नमः ।
ऋचः सामानि यस्मात्तु जज्ञिरे तुरगास्तथा ।। ३६ ।।

विप्रो मुखाद् भुजो राजा वैश्यश्चोर्वोरनन्तरम् ।
शूद्रः पद्भ्यां मुखादग्निरिन्द्रश्च मनसो विधुः ।। ३७ ।।

नेत्रात्सूर्योऽथ सञ्जज्ञे तस्मै ते ब्रह्मणे नमः ।
इयत्तया गुणानां ते निवर्तन्ते न मानवाः ।
बुद्धीनां किन्तु दौर्बल्याद्वेदश्चापि तथैव भोः ' ।। ३८ ।।

एवं तं बहुधा स्तुत्वा स्तोत्रैः श्राव्यैर्मनोहरैः ।
आदाय पद्मपत्राणि श्रीपादं वेङ्कटेशितुः ।। ३९ ।।

आर्चयामासुरव्यग्रं नामभिः सूतभाषितैः ।

मुनि गण कहने लगा—जो पृथ्वी से समस्त धूलिकणों के गिन सकेगा, वही पुरुष भगवान के अनन्त गुण तथा वीर्यों की भी गणना कर सकेगा। जिस त्रिविक्रम महाविष्णु ने समस्त पृथ्वी पर तीन बार पैर रखा तथा जिसने धर्मों को धारण किया, उसी विष्णु भगवान को प्रणाम है। जो दस अङ्गुल का होकर भी सारे संसार में व्याप्त रहते हैं, जिससे भूत भविष्यत तथा वर्तमान सभी व्याप्त हैं, उसी विष्णु को प्रणाम है। जिसके एक भाग में संसार तथा त्रिपाद आकाश है, उसको नमस्कार करता हूँ। जिससे ऋक्, साम तथा तुरग आदि उत्पन्न हुए है, जिसके मुख से ब्राह्मण, बाहु से क्षत्रिय, ऊरु से वैश्य, पैरों से शूद्र एवं मुख से अग्नि, मन से इन्द्र तथा नेत्रों से सूर्य और चन्द्रमा उत्पन्न हुए हैं उसी परब्रह्म को नमस्कार है। मानव लोग आपके गुणों की सीमा होने के कारण आपके पाससे लौटते हैं, ऐसा नहीं, वरन् अपनी बुद्धि दौर्बल्य ही के कारण लौटते हैं। वेद भी उसी तरह की हैं। इसी तरह ऋषियों ने अनेक स्तुति मन्त्रों से स्तुति कर, पद्मपत्र लाकर सूत कथित नामावली से पाठ तथा अर्चना की। (३४-४१)

ततःप्रीतो जगद्धाता बभाषे वेङ्कटेश्वरः ।। ४० ।।

'तत्रैव नैमिशारण्ये प्रीतोऽस्मि भवतामहम् ।
वेङ्कटाचलमाहात्म्यश्रवणान्मुनयो बुधाः ।। ४१ ।।

चिरकालतपो लभ्यमपि दत्तं फलं मया ।
यद्यदिष्टं मुनीनां तु भवतां दत्तमेव तत् ।। ४२ ।।

वेङ्कटाद्रेस्तु माहात्म्यं बहुदूरस्थितोऽपि यः ।
शृणोति वा श्रावयति पठेद्वा श्रद्धयान्वितः ।। ४३ ।।

कन्यामासे विशेषेण तस्याहं सुलभा ह्यहम् ।
धनं धान्यं महीमिष्टां पुत्रान्पौत्रान्ददाम्यहम् ।। ४४ ।।

ददामि सर्वान्कामांश्च देहान्ते मत्पदं तथा ।

तब जगद्धाता वेङ्कटेश भगवान प्रसन्न होकर बोले—"मैं तो उसी नैमिशारण्यं में ही। आप लोगों से प्रसन्न हो गया था। वेङ्कटाचलमाहात्म्य के सुनने से चिरकालतक तपस्या करने से जो फल होता है, वह फल हमने आप लोगों को दिया। हे मुनियो आप लोगों को जो-जो अभीष्ट हो, वह सब मैं आप लोगों को दे चुका। बहुत दूर पर रहते हुए भी, जो वेङ्कटाद्रिमाहात्म्य परम श्रद्धा एवं भक्ति से विशेषकर कन्यामास में सुनता या सुनाता, पढ़ता या पढाता है, उसके लिये मैं सुलभ हो जाता हूँ, और उसको धन धान्य, पृथ्वी, कामना, पुत्र, पौत्र सब कुछ में देता हूँ तथा उसकी सभी कामनाएँ पूर्ण कर शरीरान्त होने पर अपना पद या लोक भी प्रदान करता हूँ। (४०-४४)

इति लब्ध्वा वरांस्ते तु तत्र वत्सरपञ्चकम् ।। ४५ ।।
स्नात्वा सर्वेषु तीर्थेषु वेङ्कटाद्रौ तपोधनाः ।

आश्चर्याण्यपि दृष्टवा ते सम्यगाराध्य माधवम् ।
पुनश्च नैमिशारण्यं ययुःसर्वे तपोधनाः ।। ४६ ।।

इस वर को पाकर वे ऋषिवृन्द पांच वर्षों तक, वेङ्कटाद्रि के सभी तीर्थों में स्नान कर तथा अनेकों आश्चर्य देख भगवान माधव की पूर्णतः पूजा करके अन्ततः नैमिशारण्य में लौट आये। (४५-४६)

## अथ सूतं प्रति शौनकादिस्तुतिः

गत्वा तु नैमिशारण्यं मुनिसङ्घनिषेवितम् ।
उपसृत्य पुनः सूतं प्रोचुरेवमिदं वचः ।। ४७ ।।

अहो तव तु विज्ञानमहो सामर्थ्यमेव ते ।
यथोक्तं भवता विष्णोर्वेङ्कटाद्रिनिवासिनः ।। ४७ ।।

रूपमौदार्यरूपं च गिरिरूपं तथैव च ।
स्थितं तथैव तत्सर्वमहो वेङ्कटभूधरः ।। ४९ ।।

त्वत्प्रसादाद्वयं सर्वे कृतार्थाः स्मो महामुने ।
संस्थानं वेङ्कटेशस्य गिरेस्तस्य च सर्वतः ।। ५० ।।

दृष्टमेतत्त्वया किं वा श्रुतं वा सूत तन्मुने ।
इति स्तुतस्ततस्सूतः प्रोवाचेदं वचस्तदा ।। ५१ ।।

## अथ सूत के प्रति शौनकादि की स्तुति

तपोधनवृन्द नैमिशारण्य में जाकर मुनिसंघ सेवित श्री सूतजी से पुनः इस प्रकार कहने लगे—हे भगवान सूत जी! आपका ज्ञानभंडार धन्य है। आपका सामर्थ्य धन्य-धन्य!! आपने वेङ्कटाद्रि निवासी भगवान का रूप औदार्य तथा गिरिस्वरूप जैसा कहा वैसा ही सब कुछ है। हे महामुनि! आपकी कृपा से हम लोग परम कृतार्थ हो गये। हे मुनि! उस वेङ्कटेश जी के तथा पर्वत के सब प्रकार के संस्थान को, क्या आपने देखा था अथवा सुना था? यह सब सुन श्री सूतजी यह वचन बोले। (४७-५१)

व्यासस्यानुग्रहात्सर्वं वेद्मि तत्वं तपोधनाः ।
वेङ्कटाचलमाहात्म्यं कल्पकोटिशतैरपि ।। ५२ ।।

न शक्यं वर्षसाहस्रैः शेषाणां च सहस्रकैः ।
वक्तुं तथापि माहात्म्यं कीर्तितं किञ्चिदेव हि ।। ५३ ।।

पुण्यं पवित्रमायुष्यं महात्म्यमिदमुत्तमम् ।
यःपठेत्प्रयतो भक्त्या श्रुणुयाद्वा लिखेदपि ।
सर्वान्कामानवाप्नोति संप्राप्नोति च मङ्गलम् ।। ५४ ।।

हे तपोधन गण, मैं श्री व्यास जी की कृपा से सब कुछ जानता हूँ। वेङ्कटाचल पर्वत का माहात्म्य, करोडों-करोडों कल्पपर्यन्त हजारों-हजारों वर्ष तक, हजारों शेषनाग द्वारा भी वर्णन नहीं किया जा सकता। अतएव इस माहात्म्य का कीर्तन कुछ-कुछ कहा गया है। परम पवित्र, पुण्यकारक तथा आयुर्वर्द्धक, इस परमोत्तम माहात्म्य को जो भक्तिभाव से पढ़ता, सुनता अथवा लिखता है, वह सब कामना तथा परम मङ्गल प्राप्त करता है। (५२-५४)

" इति श्रीवाराहपुराणे वेङ्कटाचलमाहात्म्ये महर्षीणां
श्रीवेङ्कटेश्वरसेवार्थं श्रीवेङ्कटाचलागमनादिवर्णनं नाम द्विषष्ठि-
तमोऽध्यायोऽत्र त्रिशत्तमः ।

इति प्रथमो भागः ।

—: ओम् तत्सत् :—

श्रीश्रीनिवासपरब्रह्मणे नमः

श्रीवराहपुराणान्तर्गतं

# श्रीवेङ्कटाचलमाहात्म्यम्

## द्वितीयो भागः

श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ।। १ ।।

## प्रथमोऽध्यायः

## नारदस्य सुमेरुशिखरस्थयज्ञवराहदर्शनम्

**ऋषय ऊचुः—**

रौमहर्षण ! सर्वज्ञ ! पुराणार्थविशारद !
माहात्म्यं श्रोतुमिच्छामो गिरीन्द्राणां महीतले
ब्रूहि त्वं नो महाभाग के प्रधाना महीधराः ।। १ ।।

नारद शिखर सुमेरुस्थित, दर्शन यज्ञवराह ।
मणिमण्डप महँ दिव्य शुचि, शोभित बहु सुरनाह ।। १ ।।

भू देवी का आगमन, देव वराह समीप ।
धरणी प्रभु संवाद पुनि, शेषाचल आधीप ।। २ ।।

स्वामी पुष्करिणी कथन, सर्वतीर्थप्राधान्य ।
महिमाधार कुमार की, पाण्डव तुम्ब नभान्य ।। ३ ।।

देव तीर्थ भज्जन सुफल, विनती धरा वराह ।
प्रभु धरणी सह गिरि गमन श्रुतिफल परम अथाह ।। ४ ।।

# नारदजी का यज्ञवराह दर्शन

ऋषियों ने कहा—हे रोमहर्षण ! हे पुराणार्थ विशारद ! हे महामति महाभाग श्री सूत जी कृपया आप यह बतावे कि पृथ्वी पर के सब गरीन्द्रों का माहात्म्य क्या है। हम सुनाना चाहते हैं, तथा हे महाभाग यह भी अब बतलाइये कि कौन कौन पर्वत प्रधान है ? । (१)

**सूत उवाच—**

एतमेव पुरा प्रश्नमापृच्छं जाह्नवीतटे ।
व्यासं मुनिवरश्रेष्ठं सोऽब्रवीन्मे गुरूत्तमः ।। २ ।।

श्री सूत जी बोले :—श्री गंगा जी के तटपर पहले हमने भी यही प्रश्न मुनिश्रेष्ठ परमोत्तम गुरु व्यासजी से पूछा था, जिसका उत्तर उन्होंने दिया था। (२)

**व्यास उवाच—**

पुरा देवयुगे सूत ! नारदो मुनिसत्तमः ।
सुमेरुशिखरं गत्वा नानारत्नसुशोभितम् ।। ३ ।।

तन्मध्ये विपुलं दीप्तं ब्रह्मणो दिव्यमालयम् ।
दृष्ट्वा तस्योत्तरे देशे पिप्पलद्रुममुतमम् ।। ४ ।।

सहस्रयोजनोच्छ्रायं विस्तीर्णं द्विगुणं तथा ।
तन्मूले मण्डपं दिव्यं नानारत्नसमन्वितम् ।। ५ ।।

पद्मरागमणिस्तम्भैः सहस्रैस्समलङ्कृतम् ।
वैडूर्यमुक्तामणिभिः कृतस्वस्तिकमालिकम् ।। ६ ।।

नवरत्नसमाकीर्णं दिव्यतोरणशोभितम् ।
मृगपक्षिभिराकीर्णं नवरत्नमयैः शुभैः ।। ७ ।।

पुष्परागमहद्द्वारं सप्तभूमिकगोपुरम् ।
सन्दीप्तवज्रसुकृतकवाटद्वयशोभितम् ।। ८ ।।

प्रविश्यादौ ददर्शान्तर्दिव्यमौक्तिकमण्डपम् ।
वैडूर्यवेदिकं तुङ्गमारुरोह महामुनिः ।। ९ ।।

श्री व्यास जी ने कहा था—हे सूत प्राचीन काल के देवयुग में मुनिश्रेष्ठ नारदमुनि ने नानारत्नसुशोभित सुमेरु शिखर के ऊपर जाकर, उसके मध्य में अत्यन्त तेजपूर्ण ब्रह्मा का दिव्य स्थान देखा, जिसके उत्तरीय भाग में एक परमोत्तम हजार योजन ऊँचा और इसके दुगने विस्तार में फैला हुआ एक पीपल का वृक्ष था, उसके मूल में नाना रत्न जटित, पद्मराग के हजारों स्तम्भों से सुशोभित वैडूर्य मुक्तामणि आदि समलंकृत स्वस्तिकमालाओं से युक्त, नवरत्नसमाकीर्ण स्वर्गीय तोरणों से सुशोभित नवरत्नमय, मनोहर, मृग तथा पक्षियों से समाकीर्ण पुष्फराग के फाटक से युक्त, सात सोपान के गोपुर सहित चमकते हुए वज्रमणि के दोनों कपाटों से सुशोभित दिव्य मण्डप में प्रवेश कर पहले-पहल दिव्य मुक्तामण्डप को देखा। तत्पश्चात वैडूर्य की ऊँची वेदी पर महामुनि नारद जी बढ़ गये। (३-९)

तन्मध्ये तुङ्गमतुलं वसुपादविराजितम् ।
ददर्श मुक्तासङ्कीर्णं सिंहासनमहर्द्युति ।। १० ।।

तन्मध्ये पुष्करं दिव्यं सहस्रदलशोभितम् ।
श्वेतं चन्द्रसहस्राभं कर्णिकाकेसरोज्ज्वलम् ।। ११ ।।

तस्य मध्ये समासीनं पूर्णचन्द्रायुतप्रभम् ।
कैलासपर्वताकारं सुन्दरं पुरुषाकृतिम् ।। १२ ।।

चतुर्बाहुमुदाराङ्गं वराहवदनं शुभम् ।
शङ्खचक्राभयवरान्बिभ्राणं पुरुषोत्तमम् ।। १३ ।।

पीताम्बरधरं देवं पुण्डरीकायतेक्षणम् ।
पूर्णेन्दुसौम्यवदनं वपागन्धिमुखांबुजम् ।। १४ ।।

सामध्वनिं यज्ञमूर्तिं सृक्तुण्डं सृवनासिकम् ।
क्षीरसागरसङ्काशं किरीटोज्ज्वलिताननम् ।। १५ ।।

श्रीवत्सवक्षसं शुभ्रं यज्ञसूत्रविराजितम् ।
कौस्तुभश्रीसमुद्योतं समुन्नतमहोरसम् ।। १६ ।।

जाम्बूनदमयैर्दिव्यैः सुरत्नाभरणैर्युतम् ।
विद्युन्मालापरिक्षिप्तशरन्मेघमिवोज्वलम् ।। १७ ।।

वामपादतलाक्रान्तपादपीठविराजितम् ।
कटकाङ्गदकेयूरकुण्डलोज्ज्वलितं सदा ।। १८ ।।

चतुर्मुखवसिष्ठात्रिमार्कण्डेयैर्मुनीश्वरैः ।
भृग्वादिभिरनेकैश्च सेव्यमानमहर्निशम् ।। १९ ।।

इन्द्रादिलोकपालैश्च गन्धर्वाप्सरसां गणैः ।
सेवितं देवदेवेशं प्रणिपत्याभिगम्य च ।। २० ।।

दिव्यैरुपनिषद्भागैराभिष्टूय धराधरम् ।
नारदः परमप्रीतः स्थितो देवस्य सन्निधौ ।। २१ ।।

उस (वेदी) के बीच में बहुत ऊँचे आठ पादों से सुशोभित, मुक्तामाला से समाकीर्ण, दिन को शोभा देनेवाला दिव्य सिंहासन के बीच में सहस्रदल कमलों से सुशोभित, दिव्य कमलों एवं हजारों चन्द्रमा की प्रभासदृश उज्वल, कर्णिका के केसर के समान उज्वल, दिव्य श्वेतपुष्कर के तथा उसके मध्य करोड़ों पूर्णचन्द्र की प्रभावाले कैलासपर्वताकर, सुन्दर, पुरुषाकृति, परमपुरुषोत्तम, शंख चक्र अभय तथा वर आदि धारण किये, पीताम्बर पहने पुण्डरीक के समान बड़े-बड़े आंखवाले, पूर्णेन्दु के समान सुन्दर वदनवाले तथा क्या (अतंडी) की सुगन्धि से सुगन्धित मुखारविन्दयुक्त सामध्वनि से युक्त, यज्ञ मूर्ति, सृक् के समान मुखवाले, सृव के समान सुन्दर नासिकायुक्त क्षीरसागर के समान किरीट की प्रभाव से प्रकाशित उज्वल मुखवाले, वक्षस्थल पर श्रीवत्स से शोभित, परमपवित्र, यज्ञ सूत्रविराजित

कौस्तुभ की रमणीय सौन्दर्य से उद्दिप्त एवं उन्नत छातीवाले स्वर्णमय दिव्य सद्रत्नों के आभरण युक्त विद्युन्माला से परिक्षिप्त, शरत्कालीन मेघ के समान उज्ज्वल, बायें पैर के नीचे स्वर्ण पीढ (पीढा) से विराजित, कडा, वलया, वीजायाष्ठ तथा कुण्डल आदि से सुशोभित एवं चतुर्मुख, वशिष्ठ, अत्रि, मार्कण्डेय, भृगु आदि अनेकों मुनीश्वरों इन्द्रादि लोकपाल, गन्धर्व एवं अप्सरागण से अनिश सेवित देवाधिदेव भगवान के अत्यन्त निकट जाकर, प्रणिपात कर, पृथ्वी को धारण करनेवाले वराह परमात्मा की दिव्य उपनिषदों से स्तुति कर, परम प्रसन्न होकर भगवान के निकट ही नारद जी खड़े हो गये। (१०-२१)

## वराहसन्निधिं प्रति धरण्यागमनम्

एतस्मिन्नन्तरे चाभूद्दिव्यदुन्दुभिनिस्वनः ।
ततस्समागता देवी धरणी सखिसंयुता ॥ २२ ॥

सरत्नसागराकारदिव्याम्बरसमुज्ज्वला ।
सुमेरुमन्दराकारस्तनभारावनामिता ॥ २३ ॥

नवदूर्वादलश्यामा सर्वाभरणभूषिता ।
इलया वै पिंगलया सखीभ्यां च समन्विता ॥ २४ ॥

ततस्ताभ्यां समानीतं पुष्पाणां निचयं मही ।
श्रीमद्वराहदेवस्य पादमूले विकीर्य च ॥ २५ ॥

प्रणम्य देवदेवेशं कृताञ्जलिपुटा स्थिता ।
तां देवीं श्रीवराहोऽपि ह्यालिंग्याङ्के निधाय च ।
पप्रच्छ कुशलं पृथ्वीं प्रीतिप्रवणमानसः ॥ २६ ॥

इसी समय देवताओं के नगडि का शब्द सुनायी पडा और उसी समय रत्न सागराकर दिव्य कपडों से सुशोभित, सुमेरु तथा मन्द्रायल पर्वत के समान स्तर भार से झुकी हुई, नवदूर्वदल के समान श्यामवर्णवाली, सर्वाभरणभूषिता पृथ्वीदेवी

ईला, तथा पिंगला नाम की अपनी दो सखियों से संयुक्त हो, आकर इन्ही सखियों से लाई हुई पुष्पराशि को श्री वराहदेव के चरणकमलों में चढाकर, प्रणाम कर तथा हाथ जोडकर खडी हो गयी। श्री वराहदेव ने भी उस पूज्य पृथ्वी देवी को आलिङ्गन कर, गोद में बैठाकर प्रीतिपूर्ण मन से कुशल प्रश्न पूछा।

(२२-२६)

## धरणीवराहसंवादः

**श्री वराह उवाच—**

त्वां निवेश्य महीदेवि ! शेषशीर्षे सुखावहे ।
लोकं त्वयि निवेश्यैव त्वत्सहायान्धराधरान् ।
इहागतोऽस्म्यहं देवि किमर्थं त्वमिहागता ? ।। २७ ।।

श्री वराह जी बोले—हे प्रिये ! पृथ्वी देवी ! तुम को सुखपूर्ण श्री शेषनाग के मस्तक रूप स्थानपर एवं संसार के बड़े-बड़े पर्वतों को तेरे ऊपर स्थापित कर मैं यहाँ चला आया था। हे देवि ! यहाँ किस कारण से आयी हो?

**पृथिव्युवाच—**

'मां समुद्धृत्य पातालात्सहस्रफणिशोभिते ।
रत्नपीठ इवोत्तुङ्गे सरत्नेऽनन्तमूर्धनि ।। २८ ।।

कृत्वा मां सुस्थिरां देव धरांश्चापि न्यवेशयः ।
मद्धारणक्षमान्पुण्यांस्त्वन्मयान्पुरुषोत्तम ।
तेषु मुख्यान्महाबाहो मदाधारान्वदस्व मे' ।। २९ ।।

पृथ्वीदेवी बोली—मुझे पाताल से निकल कर, रमणीय रत्नपीठ के समान सहस्रफण के अनन्तमूर्धापर सुस्थिर कर जिन पर्वतों को मेरे ऊपर रख दिया हैं, हे पुरुषोत्तम ! मुझको धारण करने में समर्थ, मुख्य-मुख्य मेरे आधाररूप उन पर्वतों को मुझे बता दें।

(२८-२९)

# शेषाचलस्य सर्वपर्वतातिशायित्ववर्णनम्

**श्रीवराह उवाच—**

'सुमेरुर्हिमवान् विन्ध्यो मन्दरो गन्धमादनः ।
सालग्रामश्चित्रकूटो माल्यवान्पारियात्रकः ।। ३० ।।

महेन्द्रो मलयः सह्यः सिंहाद्रिरपि रैवतः ।
मेरुपुत्रोऽञ्जनो नाम शैलः स्वर्णमयो महान् ।। ३१ ।।

एते शैलवराः सर्वे त्वदाधारा वसुन्धरे ।
ये मया देवसङ्घैश्च ऋषिसङ्घैश्च सेविताः' ।। ३२ ।।

तब श्री वराह भगवान बोले—हे वसुन्धरे-सुमेरु, हिमाचल, विन्ध्याचल मन्धराचल, गन्धमादन, शालग्राम, चित्रकूट, माल्यवान, पारयात्रक, महेन्द्र मलयाचल, सह्य, सिंहाचल, रैवताचल, मेरुपुत्र, स्वर्णमय अञ्जनाचल आदि सभी महान महान पर्वत ही तुम्हारे आधार है जो मुझ देवताओं तथा ऋषियों से सदा सेवित रहते हैं। (३०-३२)

एतेषु प्रवरान्वक्ष्ये तत्त्वतः श्रुणु माधवि ।
सालग्रामश्च सिंहाद्रिश्शैलेन्द्रो गन्धमादनः ।। ३३ ।।

एते शैलवरा देवि दिशं हैमवतीं श्रिताः ।
दाक्षिणस्यां प्रतीतांस्तु वक्ष्ये शैलान्वसुन्धरे ।। ३४ ।।

अरुणाद्रिर्हस्तिशैलो गृध्रादिर्घटिकाचलः ।
एते शैलवराः सर्वे क्षीरनद्यास्समीपगाः ।। ३५ ।।

उनमें सर्वश्रेष्ठों को मैं बतलाता हूँ। तुम ध्यानपूर्वक सुनो। शालग्राम सिंहाचल तथा गन्धमादन वे तीनों पर्वतश्रेष्ठ हिमालय पर्वत की दिशा में आश्रित है

और दक्षिण दिशा में जो, जो प्रसिद्ध विशाल पर्वत हैं, उनको भी कहता हूँ। अरुणाद्रि, हस्तिशैल, गृध्राद्रि तथा घटिकाचल ये पर्वत क्षीरनदी के निकट है। (३३-३५)

हस्तिशैलादुत्तरतः पञ्चयोजनमात्रतः ।
सुवर्णमुखरी नाम नदीनां प्रवरा नदी ।। ३६ ।।

तस्या एवोत्तरे तीरे कमलाख्यः सरोवरः ।
तत्तीरे भगवानास्ते शुकस्य वरदो हरिः ।। ३७ ।।

बलभद्रेण संयुक्तः कृष्णो भक्तार्तिनाशनः ।
वैखानसैर्मुनिगणैर्नित्यमाराधितोऽमलैः ।। ३८ ।।

हस्ति शैल के पांच योजन उत्तरीय भाग में स्वर्णमुखरी नाम की एक श्रेष्ठ नदी है और उसके भी उत्तरीय भाग में कमल नामक सरोवर है। उसी सरोवर के तीर पर श्री शुकदेव जी को वर देनेवाले वैखानसाश्रिमल मुनि गणाराधित तथा भक्तार्तिनाशन भगवान श्रीकृष्ण बलभद्र के साथ रहते हैं। (३६-३८)

कमलाख्यस्य सरस उत्तरे काननोत्तमे ।
क्रोशद्वयार्धमात्रे तु हरिचन्दनशोभिते ।। ३९ ।।

श्रीवेङ्कटाचलो नाम वासुदेवालयो महान् ।
सप्तयोजनविस्तीर्णः शैलेन्द्रो योजनोच्छ्रितः ।। ४० ।।

अस्ति स्वर्णमयो देवि रत्नसानुभृदायतः ।
इन्द्राद्या दैवतगणा वसिष्ठाद्या मुनीश्वराः ।। ४१ ।।

सिद्धास्साध्याश्च मरुतो दानवा दैत्यराक्षसाः ।
रम्भाद्या अप्सरस्सङ्घाःवसन्ति नियतं धरे ।। ४२ ।।

तपश्चरन्ति नागाश्च गरुडाः किन्नरास्तथा ।
एतैरधिष्ठितास्तत्र सरितः पुण्यदर्शनाः ।। ४३ ।।

सरांसि विविधान्यत्र सन्ति दिव्यानि माधवि ।

उसी कमल नामक तालाब के उत्तरीय भाग के अढाई क्रोसों में हरिचन्दन शोभित परमोत्तम जंगल में वेङ्कटाचल नाम का महान वासुदेवालय है। यह वेङ्कटाचल सात योजन विस्तीर्ण और एक योजन ऊँचा है। हे देवि! यह पर्वत रत्नमय चोटियों से परिपूर्ण है, जहाँ इन्द्रादि देवतागण, वसिष्ठादि मुनीश्वर, सिद्ध, साध्य मरुत, दानव, दैत्य राक्षस, रम्भादि अप्सरासंघ सभी स्थायी रूप से निवास करते हैं। तथा गरुडगण, किन्नरगण तपस्या करते रहते है। हे माधवि! हे पृथ्वीदेवि! इन्ही सबों से अधिष्ठित वहाँ पर अनेकों पुण्यदर्शन पवित्र सलिला नदियाँ तथा पुष्करिणियाँ हैं। (३९-४३)

## स्वामिपुष्करिण्याः सर्वतीर्थातिशायित्ववर्णनम्

तीर्थानां चैव सर्वेषां श्रुणुष्व प्रवराणि वै ।। ४४ ।।

चक्रतीर्थं दैवतीर्थं वियद्गङ्गा तथैव च ।
कुमारधारिकातीर्थं पापनाशनमेव च ।। ४५ ।।

पाण्डवं नाम तीर्थं च स्वामिपुष्करिणी तथा ।
सप्तैतानि वराण्याहुर्नारायणगिरौ शुभे ।। ४६ ।।

वहाँ के सभी तीर्थों में श्रेष्ट तीर्थों के विषय में कहता हूँ। चक्रतीर्थ दैवतीर्थ, आकाशगंगा, कुमारधारिकातीर्थ, पापनाशनतीर्थ, पाण्डवतीर्थ तथा स्वामिपुष्करिणीतीर्थ इन्ही सातों को नारायण गिरि पर श्रेष्ठ बताते हैं। (४४-४६)

एतेषु प्रवरा देवि स्वामिपुष्करिणी शुभा ।
अस्यास्तु पश्चिमे तीरे निवसामि त्वया सह ।। ४७ ।।

आस्तेऽस्या दक्षिणे तीरे श्रीनिवासो जगत्पतिः ।
गङ्गाद्यैस्सकलैस्तीर्थैःसमासा सागराम्बरे ।। ४८ ।।

त्रैलोक्ये यानि तीर्थानि सरांसि सरितस्तथा ।
तेषां स्वामित्वमापन्ने धरे स्वामिसरोवरे ।। ४९ ।।

स्वामिपुष्करिणीं पुण्यां सेवितुं दिव्यभूधरे ।
वसन्ति सर्वतीर्थानि तेषां संख्यां वदामि ते ।। ५० ।।

हे देवि ! इन सबों में भी प्रधान स्वामिपुष्करिणी तीर्थं ही है। इसी स्वामिपुष्करिणी के पश्चिम तीर पर मैं तुम्हारे साथ वास करता हूँ और इसी के दक्षिण भाग में जगत्पति श्रीनिवास रहते हैं। यह पुष्करिणीतीर्थ गंगादि सभी तीर्थों के समान है तथा त्रैलोक्य में जितनी नदी, तालाब आदि तीर्थ हैं, उन सब तीर्थों का स्वामित्व इसी स्वामिपुष्करिणी पर है। सभी तीर्थ परम पवित्र पुण्य स्वामिपुष्करिणी के सेवार्थ आकर बसते हैं जिनकी संख्या के विषय में मैं तुमसे कहता हूँ। (४७-५०)

षट्षष्ठिकोटितीर्थानि पुण्येऽस्मिन्भूधरोत्तमे ।
तेषु चात्यन्तमुख्यानि षट् तीर्थानि वसुन्धरे ।। ५१ ।।

पञ्चानां तीर्थराजानां तुम्बो गर्भसहो महान् ।
गर्भवासभयध्वंसो स्नातानां भूधरोत्तमे ।। ५२ ।।

हे पृथ्वी ! इस पुण्य भूधरोत्तम पर छाछठ करोड तीर्थ है, उनमें विशेषकर छः ही मुख्य तीर्थ है। पर्वत श्रेष्ठ में स्नानकारियों को गर्भभय से मुक्त करनेवाला तुम्बतीर्थ पांच तीर्थराजों में गर्भ के समान है। (५१-५२)

**धरण्युवाच :—**

षट् तीर्थानि महाबाहो त्वयोक्तानि महीतले ।
माहात्म्यं वद तेषां मे यथाकालं यथाविधि ।
फलानि तेषु स्नातानां नराणां वद भूधरे ! ।। ५३ ।।

पृथ्वीदेवी बोली हे प्रभु ! हे महाबाहु !! आपने जो इस पर्वत पर छः तीर्थ बताये, उनका यथाकाल यथाविधि माहात्म्य तथा उनमें स्नान करनेवालों के फलों को मुझ से बतावें। (५३)

**श्रीवराह उवाच—**

नारायणाद्रिमाहात्म्यं वदामि श्रुणु माधवि !
देवाश्च ऋषयश्चैव योगिनः सनकादयः ॥ ५४ ॥

कृतेऽञ्जनाद्रिं त्रेतायां नारायणगिरिं तथा ।
द्वापरे सिंहशैलं च कलौ श्रीवेङ्कटाचलम् ॥ ५५ ॥

प्रवदन्तीह विद्वांसः परमात्मालयं गिरिम् ।
योजनानां सहस्रान्ते द्वीपान्तरगतोऽपि वा ॥ ५६ ॥

यो नमेत् भूधरेन्द्रं तद्दिशमुद्दिश्य भक्तितः ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ५७ ॥

श्री वराह भगवान बोले—हे माधवि देवि ! मैं नारायणाद्रि का माहात्म्य वर्णन करता हूँ उसे तुम सुनो। देवता, ऋषि तथा विद्वद्वर सनकादि योगी परमात्मा के निवास स्थान इस पर्वत को कृतयुग में अंजनाद्रि, त्रेतायुग में नारायण-गिरि, द्वापरयुग में सिंहशैल तथा कलियुग में श्री वेङ्कटाचल कहते हैं। जो भक्तिभाव से, हजारों योजन दूर किसी दूसरे द्वीपान्तर में रहकर भी उस दिशा को लक्ष्यकर इस पर्वत को प्रणाम करता है वह सब पापों से मुक्त होकर विष्णु लोक में चला जाता है। (५४-५७)

## कुमारधारामाहात्म्यम्

तस्मिन्षट्तीर्थमाहात्म्यं यथाकालं वदामि ते ।
श्रुणुष्वावहिता भद्रे सर्वपापप्रणाशनम् ॥ ५८ ॥

कुम्भसंस्थे रवौ माघे पौर्णमास्यां महातिथौ ।
मघानक्षत्रयुक्तायां भूधरेन्द्रे वसुन्धरे ॥ ५९ ॥

कुमारधारिका नाम सरसी लोकपावनी ।
यत्रास्ते पार्वतीसूनुः कार्तिकेयोऽग्निसंभवः ।। ६० ।।

देवसेनासमायुक्तः श्रीनिवासार्चकोऽमले ।
तस्यां यः स्नाति मध्याह्ने तस्य पुण्यफलं श्रुणु ।। ६१ ।।

## कुमारधारामाहात्म्य

उन षट्तीर्थों का यथाकाल पापनाशकारक सर्व माहत्म्य मैं तुमको बतलाता हूँ। सावधान हो सुनो। हे वसुन्धरे! इस पर्वत पर कुमारधारिका नामक लोकपावन तथा परम पवित्र सरोवर है, जहाँ पार्वतीपुत्र, अग्नि सम्भव श्री कार्तिकेयजी देवसेना नामक निज पत्नी के साथ श्रीनिवास की अर्चना करते हुए रहते है। जो कोई उसमें कुम्भ मास के रविवार दिन को माघ की पौर्णमासी की महापुण्यतिथि में मघानक्षत्र युक्त होनेपर मध्याह्न काल में स्नान करता है, उसका फल, हे अमले तुम सुनो। (५८-६१)

गङ्गादिसर्वतीर्थेषु यःस्नाति नियमाद्धरे! ।
द्वादशाब्दं जगद्धात्रि तत्फलं समवाप्नुयात् ।। ६२ ।।

योऽन्नं ददाति तत्तीर्थे शक्त्या दक्षिणयान्वितम् ।
स तावत्फलमाप्नोति स्नाने तूक्तं फलं यथा ।। ६३ ।।

हे जगद्धात्रि! गंगादि सब तीर्थों में नियमबद्ध होकर जो बारह वर्ष तक स्नान करता है; उसका फल इसमें उस दिन केवल एकबार स्नान करनेवाला पाता है और जो कोई इस तीर्थ में यथाशक्ति दक्षिणा के साथ अन्नदान करता है, उसे भी उपर्युक्त फल ही मिलता है। (६२-६३)

## तुम्बतीर्थमाहात्म्यम्

मीनसंस्थे सवितरि पौर्णमासी तिथौ धरे ।
उत्तराफल्गुनीयुक्ते चतुर्थे कालसत्तमे ।। ६४ ।।

पञ्चानामपि तीर्थानां तुम्बेऽथ गिरिगह्वरे ।
यः स्नाति मनुजो देवि पुनर्गर्भे न जायते ।। ६५ ।।

## तुम्बतीर्थमाहात्म्य

हे देवि ! जो मनुष्य मीनस्थ सूर्य की पौर्णमासी तिथि में उत्तर फल्गुनी नक्षत्र होने पर चतुर्थकाल में उक्त पांचों तीर्थों में से इस गिरिगह्वरस्थ तुम्बतीर्थ में स्नान करेगा, वह पुनः गर्भ से उत्पन्न नहीं होगा । (६४-६५)

## आकाशगङ्गामाहात्म्यम्

अग्निवाहस्थिते भानौ चित्रानक्षत्रसंयुते ।
पूर्णिमाख्ये तिथौ पुण्ये प्रातःकाले तथैव च ।
आकाशगङ्गासरिति स्नातो मोक्षमवाप्नुयात् ।। ६६ ।।

## आकाशगंगा महात्म्य

मेष राशिस्थसूर्य का चित्रा नक्षत्र से योग होने पर पुण्य पूर्णिमा तिथि के प्रातःकाल में इस आकाशगंगा नामक सरिता में स्नान करने से मनुष्य मोक्ष पाता हैं । (६६)

## पाण्डवतीर्थमाहात्म्यम्

वृषभस्थे रवौ राधे द्वादश्यां रविवासरे ।
शुक्लेवाप्याऽथवा कृष्णे पक्षे भौमसमन्विते ।। ६७ ।।

तीर्थे पाण्डवनाम्न्यत्र सङ्गमे स्नाति यो नरः ।
नेह दुःखमवाप्नोति परत्र सुखमश्नुते ।। ६८ ।।

## पाण्डवतीर्थमाहात्म्य

हे राधे ! वैशाख मास द्वादशी तिथि रविवार भौमसमन्वित शुक्ल या कृष्ण पक्ष में संगमकाल में इस पाण्डव तीर्थ में जो मनुष्य स्नान करेगा, वह इस लोक में कभी दुःख न पावेगा तथा परलोक में भी परम सुख लाभ करेगा । (६७-६८)

## पापनाशनतीर्थमाहात्म्यम्

शुक्ले पक्षेऽथवा कृष्णे याऽर्कवारेण सप्तमी ।
युक्ता पुष्यर्क्षसंयुक्ता हस्तर्क्षेण युतापि वा ।। ६९ ।।

तस्यां तिथौ महाभागे पापनाशनसंज्ञके ।
तीर्थे यः स्नाति नियमात् भूधरेन्द्रस्य मस्तके ।। ७० ।।

कोटिजन्मार्जितैः पापैर्मुच्यते स नरोत्तमः ।

## पापनाशनतीर्थमाहात्म्य

हे महाभागे ! भूधरेन्द्र शिखरस्थ पापनाशन तीर्थ में जो मनुष्य पुण्य अथवा हस्त नक्षत्रयुक्त पौष मासके शुक्ल अथवा कृष्णपक्ष के रविवार दिन की सप्तमी तिथि में नियम बद्ध होकर स्नानकरता हैं, वह पुरुषश्रेष्ठ करोडों जन्म में किये हुए पापों से मुक्त हो जाता है । (६९-७०)

## देवतीर्थमाहात्म्यम्

श्रुणु देवि ! परं गुह्यमनन्ताख्ये महागिरौ ।। ७१ ।।

मद्दिव्यालयवायव्ये शिखरे गिरिगह्वरे ।
देवतीर्थमिति ख्यातं तटाकमतिशोभनम् ।। ७२ ।।

तस्मिन्पुण्यतमे देवि स्नानकालं वदामि ते ।
गुरुपुष्ये व्यतीपाते सोमश्रवणके तथा ।। ७३ ।।

दिनेष्वेतेषु यः स्नाति तस्य पुण्यफलं शृणु

## देवतीर्थमाहात्म्य

हे देवि ! अनन्त नामक पर्वत में मेरे दिव्यालय के वायव्यकोण में गिरिशिखर के गह्वर में अतिरहस्यमय देवतीर्थ नामक अत्यन्त सुन्दर तालाब है। उस पुण्यतम तालाब में स्नान करने का समय मैं बतलाता हूँ। गुरुवार के दिन पुष्य के व्यतीत हो जाने पर अथवा सोमवार को श्रवण नक्षत्र पड़ने पर जो कोई स्नान करता है उसका फल सुनो। (७१-७३)

यानि कानीह पापानि ज्ञानाज्ञानकृतानि च ॥ ७४ ॥

तानि सर्वाणि नश्यन्ति देवतीर्थेऽतिपावने ।
पुण्यान्यपि च वर्धन्ते देवतीर्थनिमज्जनात् ॥ ७५ ॥

दीर्घमायुरवाप्नोति पुत्रपौत्रसमन्वितः ।
अन्ते स्वर्गं समासाद्य चन्द्रलोके महीयते ॥ ७६ ॥

तद्दिनेष्वन्नदो देवि ! यावज्जीवान्नदो भवेत् ।
अतिगुह्यतमं देवि ! प्रोक्तं तुभ्यं वसुन्धरे ! ॥ ७७ ॥

ज्ञान वा अज्ञान चाहे किसी तरह से किया गया, जो कोई भी पाप हो वह सभी इति अति पवित्र देवतीर्थ में विलीन अथवा नाश हो जाता है। इस देवतीर्थ में स्नान करने से पुण्य की अत्यन्त वृद्धि भी होती हैं तथा मनुष्य पुत्र-पौत्र सबों से परिपूर्ण होकर दीर्घ आयु पाता है, अन्त में स्वर्गलोक पाकर चन्द्रलोक में बढ़ता हैं। हे देवि ! उस दिन अन्नदान करनेवाला जीवनभर अन्नका अखण्ड रूप से दान करनेवाला होता है। हे वसुन्धरे ! तुमसे हमने अत्यन्त गुह्यतम वार्ता कही है। (७४-७७)

श्रुत्वाऽथ पृथिवी देवी प्रीतिप्रवणमानसा ।
इष्टाभिर्वाग्भिरतुलं तुष्टाव धरणीधरम् ॥ ७८ ॥

यह सब सुनकर पृथ्वी देवी ने अत्यन्त प्रसन्न चित्त से अनुपम धरणीधर भगवान वराहदेव की मीठे स्वरों में स्तुति की। (७८)

## धरणीकृतवराहस्तुतिः

धरण्युवाच :—

'नमस्ते देवदेवेश वराहवदनाच्युत ।
क्षीरसागरसङ्काश ! वज्रश्रृङ्ग ! महाभुज ! ॥ ७९ ॥

उद्धृतास्मि त्वया देव कल्पादौ सागरांभसः ।
सहस्रबाहुना विष्णो धारयामि जगन्त्यहम् ॥ ८० ॥

अनेकदिव्याभरणयज्ञसूत्रविराजित ।
अरुणारुणाम्बरधर दिव्यरत्नविभूषित ॥ ८१ ॥

उद्यद्भानुप्रतीकाशपादपद्म नमो नमः ।

## धरणीकृतवराहस्तुति

धरणीदेवी बोली—हे वराहवदन! देवाधिदेव, भगवान, अच्युत, क्षीरसागर के समान रुपवाले, वज्र शृङ्ग तथा महाभुज, हे प्रभो! आपको प्रणाम करती हूँ। हे विष्णु! सहस्रबाहु! कल्प के आरंभकाल में समुद्र के जलतल से आपसे ही बाहर निकाली हुई में जगत को धारण करती हूँ। हे अनेक दिव्य आभूषणों को धारण करनेवाले, यज्ञसूत्र विराजित, रक्तवत, एकान्त, लाल वस्त्रधारी, दिव्यरत्न विभूषित तथा उगते हुए सूर्य की प्रभा के समान पादपद्मवाले भगवान! आपको प्रणाम है। (७९-८१)

बालचन्द्राभदंष्ट्राग्र महाबलपराक्रम ! ॥ ८२ ॥

दिव्यचन्दनलिप्ताङ्ग तप्तकाञ्चनकुण्डल !
इन्द्रनीलमणिद्योतिहेमाङ्गदविभूषित ॥ ८३ ॥

वज्रदंष्ट्राग्रनिर्भिन्न हिरण्याक्षमहाबल ! ।
पुण्डरीकाभिताम्राक्ष सामस्वनमनोहर ।। ८४ ।।

श्रुतिसीमन्तभूषात्मन् सर्वात्मन् चारुविक्रम ।
चतुराननशंभुभ्यां वन्दितायतलोचन ।। ८५ ।।

सर्वविद्यामयाकार शब्दातीत नमो नमः ।
आनन्दविग्रहानन्त कालकाल नमो नमः ।। ८६ ।।

इति स्तुत्वाऽचला देवी ववन्दे पादयोर्विभुम् ।। ८७ ।।

बालचन्द्रमा के समान नोकीले चमकदार दांतवाले; महाबल, पराक्रमी दिव्य चन्दन लिप्ताङ्ग, तप्तकाञ्चनमय कुण्डलधारी, इन्द्रनीलमणि जटित स्वर्ण वलयधारी, वज्र के समान दन्ताग्रों से महाबलवान, हिरण्याक्ष को विदीर्ण कर देनेवाले, पुण्डरीक के समान लाल आंखवाले, सामवेद के स्वर से मनोहर वेदान्त भूषण; सर्वात्मा विचित्र प्रभावाले ! ब्रह्मा तथा शंकर से नमस्कृत विशाल नेत्रवाले, सर्व विद्यामयाकार तथा शब्दातीत हे भगवान ! आपको प्रणाम है। हे आनन्द विग्रह ! हे अनन्त, हे काल के भी काल ! आपको बारंबार प्रणाम है। इस प्रकार स्तुतिकर धरणीदेवी ने भगवान के चरण कमलों में प्रणाम किया। (८२-८७)

## वराहस्य भगवतो धरण्या साकं शेषाचलागमनम्

वन्दमानां समुद्वीक्ष्य प्रीत्युत्फुल्लविलोचनः ।
उद्धृत्य धरणीं देवीमालिलिङ्गाऽथ बाहुभिः ।। ८८ ।।

आघ्राय धरणीवक्त्रं वामाङ्के सन्निवेश्य च ।
आरुह्य गरुडेशानं जगाम वृषभाचलम् ।। ८९ ।।

मुनीन्द्रैर्नारदाद्यैश्च स्तूयमानो महीपतिः ।
स्वामिपुष्कारणीतीरे पश्चिमे लोकपूजिते ।। ९० ।।

तदाद्यैस्तैः श्रीवराहो मुनीन्द्रैस्तत्र पूजितः ।
वैखानसैर्महाभागैर्ब्रह्मतुल्यैर्महात्मभिः ।। ९१ ।।

## पृथ्वी के साथ भगवान का शेषाचल पर जाना

भगवान ने परमप्रफुल्लित नयन हो पृथ्वीदेवी को प्रणाम करते देखकर उसे उपर उठा, हृदय से लगा, चारों भुजा से आलिङ्गन कर लिया और धरणीदेवी के मुखकमल को सूंधकर तथा अपने बायेबगल बैठाकर गरुड़पर सवार हो वृषभाचल पर चले गये। लोक पूजित स्वामिपुष्करिणी के पश्चिमीय तीरपर नारदादि मुनियों तथा ब्रह्मतुल्य महात्मा महाभाग श्री वैखानसों से श्री वराह भगवान वहीं पूजित हुए रहते है। (८८-९१)

## अध्यायफलश्रुतिः

**व्यास उवाच :—**

तद्दृष्ट्वा नारदः सूत ! मुनीनामुक्तवान्पुरा ।
तदेतदहमश्रौषं तत्र वै मुनिसंसदि ।। ९२ ।।

यत्पृष्टोऽहं त्वया सूत माहात्म्यं धरणीभृताम् ।
मया तूक्तं यथावद्धि नारदाच्च पुरा श्रुतम् ।। ९३ ।।

य इदं धर्मसंवादमावयोःसूत ! पावनम् ।
पठेद्वा देवपुरतो ब्राह्मणानां पुरस्तथा ।। ९४ ।।

सर्वेषामपि वर्णानां श्रृण्वतां भक्तिपूर्वकम् ।
स प्रतिष्ठितमाप्नोति पुत्रपौत्रसमन्वितः ।
श्रुण्वतामपि सर्वेषां यदिष्टं तद्भविष्यति ' ।। ९५ ।।

व्यास जी बोले ! हे सूत जी ! प्राचीन काल में वह सब देखकर नारद जी ने मुनियों से कहा और उन मुनियों की सभा में हमने यही सब सुना था। हे सूत जी। आपने जो मुझ को धरणीदेवी के विषय में पूछा वही मैंने नारद जी से सुना हुआ

आप से कहा। जो कोई हम लोगों का परमपवित्र यह धर्म संवाद देवमन्दिर अथवा ब्राह्मणों वा और सभी वर्णों के सामने भक्ति भाव से पढेगा सुनेगा वह पुत्र पौत्र से संपन्न होकर अद्‌भुत प्रतिष्ठा लाभ करेगा और अन्यान्य कोई भी जो इसे सुनेगा, वह भी अपना सारा अभीष्ठ प्राप्त करेगा। (९२-९५)

इति मे भगवान्व्यासः प्रोवाच मुनिसेवितः ।
यथाश्रुतं मया पूर्वं कृष्णद्वैपायनाद्गुरोः ।। ९६ ।।

तत्तथा सर्वमेवात्र मयाप्युक्तं मुनीश्वराः !' ।
श्रुत्वा सूत वचस्त्वित्थं ते प्रीतमनसोऽभवन् ।। ९७ ।।

श्री सूत जी बोले ! हे मुनीश्वरो ! जो कुछ मैंने भी भगवान कृष्ण द्वैपायन श्री गुरुदेव व्यास जी से जैसे सुना ठीक वही एवं उसी प्रकार कहा। इसी तरह मुनिगण से सेवित श्री व्यासजी ने मुझसे कहा। मुनिगण यह सूत जी के वचन सुन अत्यन्त प्रसन्न होकर कहने लगे। (९६-९७)

**ऋषय ऊचु :—**

सूत ! त्वयोक्तं भुवि पर्वतेषु पुण्येषु पुण्यस्य महीधरस्य ।
माहात्म्यमस्माकमहीन्द्रनाम्नः पापापहं मोक्षफल-
प्रदायकम् ।। ९८ ।।

ततो वृषाद्रिं सम्प्राप्य वराहो धरणीयुतः ।
किमुक्तवान् धरण्यै स तन्नो ब्रूहि महामते ।। ९९ ।।

ऋषियों ने कहा—हे महाभाग सूत जी ! आपने हम लोगों को पापहारक मोक्षफलदायक पृथ्वीतल पर के परमपुण्य तथा पर्वतों में श्रेष्ट शेष नामक पर्वत का माहात्म्य कहा है; किन्तु अब कृपया यह बतावे कि पृथ्वी देवी के साथ वराह भगवान ने वृषाद्रि पर जाकर पृथ्वी देवी से क्या क्या कहा ? (९८-९९)

इति श्रीवाराहपुराणे भूगोलोपाख्याने धरणीवराहसंवादे
श्रीवेङ्कटाचलमाहात्म्ये उत्तरभागे नारदस्य सुमेरुशिखरस्थयज्ञवराह
दर्शनप्राप्त्यादिवर्णनं नाम प्रथमोऽध्यायः

# द्वितीयोऽध्याय:

## श्रीवराहमन्त्राराधानविधिः

**श्री सूत उवाच :—**

श्रुणुध्वं मुनयः सर्वे कथां पुण्यां पुरातनीम् ।
वैवस्वतेऽन्तरे पूर्वं कृते पुण्यतमे युगे ।। १ ।।

नारायणाद्रौ देवेशं निवसन्तं क्षमापतिम् ।
वराहरूपिणं देवं धरणीसखिभिर्वृता ।
प्रणम्य परिपप्रच्छ रक्तपद्मायतेक्षणम् ।। २ ।।

धरणी से वाराह का, मन्त्र वराह बरवान ।
मन्त्र प्रभावहि धर्म मनु, इष्टसिध्युपारख्यान ।। १ ।।

आराधन विधि मन्त्र का, विस्तृत श्री वाराह ।
इस द्वितीय अध्याय में, शिक्षा कीन्ह प्रवाह ।। २ ।।

## श्रीवराह मन्त्राराधन विधि

श्री सूतजी बोले—हे सकल मुनिवर्गो। आप लोग प्राचीनकाल की परम पुण्य प्रद कथा सुने। अत्यन्त प्राचीन काल में वैवस्वतमन्वन्तर के अन्तर्गत परमपुण्यतम कृतयुग में श्रीनारायणपर्वत पर निवास करनेवाले एवं रक्तकमल के समान दीर्घ आंखवाले वराहरूप क्षमापति भगवान को सखियों से आवृत होकर श्री पृथ्वी देवी प्रणाम कर पूछने लगी। (१-२)

**धरण्युवाच :—**

आराध्यः कैन मन्त्रेण भवान्प्रीतो भविष्यति ।
तं मे वद त्वं देवेश यः प्रियो भवतः सदा ।। ३ ।।

जपतां सर्वसम्पत्तिकारकं पुत्रपौत्रदम् ।
सार्वभौमत्वदं चैव कामिनां कामदं सदा ।। ४ ।।

अन्ते यस्त्वत्पदप्राप्तिं ददाति नियतात्मनाम् ।
एवम्भूतं वद प्रीत्या मयि वाराह मानद ! ।। ५ ।।

धरणी देवी बोली—हे देवेश ! आप किस मन्त्र से आराधित होकर प्रसन्न होते हैं । हे मान दाता वराह भगवान ! आप प्रसन्न होकर अपने परम प्रिय मन्त्र को कृपया कहें । जो सदा जपनेवालों को सम्पत्ति, पुत्र एवं पौत्र से भरा पूरा कर देता है, जो सार्वभौमत्व एवं सब तरह की कामनाओं को पूर्ण करता है और अन्त में आपके पद को भी दे देता है । (३-५)

इति पृष्टस्तया भूम्या प्राह प्रीतिस्मिताननः ।। ६ ।।

श्री सूतजी कहने लगे—श्री भूमिदेवी के इस प्रकार पूछने पर प्रसन्नमुख श्री वराह भगवान कहने लगे । (६)

**श्रीसूत उवाच :—**

श्रृणु देवि परं गुह्यं सद्यस्सम्पत्तिकारकम् ।
भूमिदं पुत्रदं गोप्यमप्रकाश्यं कदाचन ।। ७ ।।

किञ्च शुश्रूषवे वाच्यं भक्ताय नियतात्मने ।

श्री वराह भगवान बोले । हे देवि ! सुनो जो परम गोप्य तुरन्त ऐश्वर्य, सम्पत्ति तथा भूमि आदि सबको देनेवाला है और जो कभी प्रकाश करने लायक नहीं है, उसे मैं कहता हूँ । वह मन्त्र केवल नियतात्मा परम भक्त को ही बताया जा सकता है । (७)

ॐ नमः श्रीवराहाय धरण्युद्धरणाय च ।। ८ ।।

वह्निजायासमायुक्तः सदा जाप्यो मुमुक्षुभिः ।
अयं मंत्रो धरादेवि सर्वसिद्धिप्रदायकः ।। ९ ।।

ऋषिस्सङ्कर्षणः प्रोक्तो देवता त्वहमेव हि ।
छन्दः पंक्तिः समाख्याता श्रीबीजं समुदाहृतम् ।। १० ।।

चतुर्लक्षं जपेन्मन्त्रं सद्गुरोर्लब्धतन्मनुः ।
जुहुयात्पायसान्नं वै क्षौद्रसर्पिस्समन्वितम् ।। ११ ।।

"मन्त्र

"ओं नमः श्रीवराहाय धरण्युद्धरणाय च ।"

यह मन्त्र सदा मोक्षाभिलाषियों को जप करना चाहिये। हे देवि ! यह मन्त्र सब सिद्धियों को देनेवाला है। इसके ऋषि संकर्षण हैं, और इसका देव मैं ही हूँ। इसके छन्द पङ्क्तिच्छन्द और बीज "श्री" है। इसको सद्गुरु से पाकर चार लाख जप करे, और घी तथा मधु के साथ पायसान्न होम करे। (८-११)

अथ ध्यानं प्रवक्ष्यामि मनःशुद्धिप्रदायकम् ।
शुद्धस्फटिकशैलाभं रक्तपद्मायतेक्षणम् ।। १२ ।।

वराहवदनं सौम्यं चतुर्बाहुं किरीटिनम् ।
श्रीवत्सवक्षसं चक्रशङ्खाभयकराम्बुजम् ।। १३ ।।

वामोरुस्थितया युक्तं त्वया मां सागरांबरे ।
रक्तपीताम्बरधरं रक्ताभरणभूषितम् ।। १४ ।।

श्रीकूर्मपृष्टमध्यस्थशेषमूर्त्यब्जसंस्थितम् ।
एवं ध्यात्वा जपेन्मन्त्रं सदा चाष्टोत्तरं शतम् ।। १५ ।।

सर्वान्कामानवाप्नोति मोक्षं चान्ते व्रजेद्ध्रुवम् ।
प्रोक्तं मया ते धरणि ! यत्पृष्टोऽहं त्वयाऽमले ।
अतः किं ते व्यवसितं ब्रूहि तद्विमलानने ।। १६ ।।

अनन्तर मन को शुद्धि प्रदान करनेवाले इस मन्त्र के ध्यान को बतलाता हूँ। शुद्ध स्फटिक के समान स्वच्छ, रक्तपद्म के समान आंखवाले, वराहवदन, सौम्य, चतुर्बाहु, किरीटधारी, श्रीवत्साङ्कित, शंख-चक्र-अभयास्त्रधारी तुमसे सुशोभित वामोरुवाले, रक्तपीताम्बरधारी, लाल-लाल आभूषण युक्त, श्री कूर्म की पीठ पर रहनेवाले, शेष रूप कमलकोश में बैठे हुए मेरे स्वरूप का ध्यान करता हुआ मनुष्य सदा उपर्युक्त अष्ठोत्तरशतमंत्र जप करे, तो सब कामनाओं की पूर्ति लाभकर अन्त में मोक्ष अवश्य ही प्राप्त करता है। हे अमल! पृथ्वीदेवी तुमने जो पूछा वह तो मैंने कह दिया। हे विमलानने! अब और क्या सुनने की इच्छा है, उसे भी पूछ लो। (१२-१६)

## श्रीवराहमन्त्रेण धर्मादीनां स्वाभीष्टसिद्धिवर्णनम्

**श्री सूत उवाच :—**

एतच्छ्रुत्वा ततो भूमिः पप्रच्छ पुनरेव तम्।
'केनैवानुष्ठितं देव! पुरा प्राप्तं फलं च किम्।। १७।।

इति पृष्टः पुनर्देवः श्रीवराहोऽब्रवीदिदम्।

श्री सूत जी बोले—यह सुनकर धरणीदेवी पुनः उनसे पूछने लगी कि हे देव! पहले इस मन्त्र का अनुष्ठान किसने किया था तथा उसका उसने क्या फल पाया? यह सुनकर श्री वराह भगवान पुनः कहने लगे। (१७)

पुरा कृतयुगे देवि धर्मो नाम मनुर्महान्।। १८।।

ब्रह्मणोऽमुं मनुं लब्ध्वा जप्त्वास्मिन्धरणीधरे।
मां च दृष्ट्वा वरं लब्ध्वा प्राप्तोऽभून्मामकं पदम्।। १९।।

इन्द्रो दुर्वाससश्शापात् पुरा भ्रष्टस्त्रिविष्ठपात्।
अनेनेष्ट्वात्र मां देवि पुनः प्राप्तस्त्रिविष्ठपम्।। २०।।

अन्येऽपि मुनयो भूमे जप्त्वा प्राप्ता परां गतिम्।
अनन्तः पन्नगाधीशोह्यमुं लब्ध्वाऽथ कश्यपात्।। २१।।

श्वेतद्वीपे जपित्वैव बभूव धरणीधरः ।
तस्माज्जप्यः सदा चेह मनुष्यैश्च धरार्थिभिः ।। २२ ।।

हे देवि ! पहले कृतयुग में धर्म नामक महामनु ने ब्रह्मा से इस मन्त्र को पाकर इसी पर्वत पर जप किया था और उसके फल स्वरूप मेरे दर्शन तथा वर पाकर अन्त में मेरे स्वरूप को भी पाया। प्राचीन समय में दुर्वासाऋषि के शाप से स्वर्ग से गिराये गये इन्द्रदेव ने इसी मन्त्र से मेरा पूजन कर पुनः स्वर्ग प्राप्त किया पृथ्वी तल में और अनेकों मुनियों ने इस मन्त्र को जपकर परमगति लाभ किया। पन्नगाधीश श्री अनन्तभगवान भी कश्यप ऋषी से इसी मन्त्र को पाकर श्वेतद्वीप में जपकर धरणीधर हो गये। अत एव भूमि चाहनेवाले को यह मन्त्र सर्वदा जपना चाहिये। (१९-२२)

**श्रीसूत उवाच :—**

एतच्छ्रुत्वाऽथ सुप्रीता पुनः प्राह धराधरम् ।। २३ ।।

श्री सूत जी बोले—यह सुनकर परम प्रसन्न हो, धरणी देवी धराधर भगवान से पुनः बोली। (२३)

**धरण्युवाच :—**

वेङ्कटाख्ये महाशैले श्रीनिवासो जगत्पतिः ।
कदाह्यायाति देवेशः श्रीभूमिसहितोऽमलः ।। २४ ।।

कथं कल्पान्तरस्थायी भविष्यति जनार्दनः ।
एतद्ब्रूहि वराहात्मन् ! महत्कौतूहलं मम ।। २५ ।।

धरणी देवी बोली—वेङ्कटाचल पर्वत पर जगत्पति देवाधिदेव अमल श्रीनिवास भगवान श्री तथा भूमिदेवी के साथ कब आते हैं ? और वही जर्नादन कल्पान्तर स्थायी किस प्रकार हो जाते हैं ? हे वराह देव। आप मुझे यह बतला दें। (२४-२५)

इति श्रीवाराहपुराणे भूगोलोपाख्याने धरणीवराहसंवादे
श्रीवेङ्कटाचलमाहात्म्ये उत्तरार्धे श्रीवराहमन्त्राराधनविध्यादि
वर्णनं नाम द्वितीयोऽध्यायः

## तृतीयोऽध्यायः

## अगस्त्यप्रार्थनया भगवतः सर्वजनदृग्गोचरत्वम्

**श्रीवराह उवाच :—**

हन्त ! ते कथयिष्यामि पुरावृत्तं वरानने ! ।
श्रृणु पुण्यं महादेवि सभविष्यं सहोत्तरम् ।। १ ।।

ऋषि अगस्त्य की विनय से, श्रीवराह भगवान ।
दृग्गोचर होइ नरन के, ईश रहे नहिं यान ।। १ ।।

हुआ मित्रवर्मा नृपहिं, वियतराज सुतवीर ।
धरणी से पद्मावती, वसूदान अति धीर ।। २ ।।

## भगवान की सर्वप्रत्यक्षता का वर्णन

**श्री वराहदेव बोले—हे वरानने ! हे प्रिये ! ! मैं तुमको प्राचीन काल की सभी बातें कहता हूँ । हे देवि उस परम पवित्र पुण्य कथा को भूत एवं भावी वृत्तान्त के साथ सब कुछ सुनो ।** (१)

वैवस्वतेऽन्तरे देवि ! पूर्वे कृतयुगाऽन्तरे ।
वायोस्तपो महद्दृष्ट्वा श्रीभूमिसहितोऽनघे ।। २ ।।

आगच्छच्छ्रीनिवासश्च स्वामिपुष्करिणीतटे ।
दक्षिणेऽस्मिन्पुण्यतमे विमाने नन्दसंज्ञके ।। ३ ।।

वसिष्यति च श्रीकान्तो वायोः प्रियकरो हरिः ।
तदारभ्य हृषीकेशः सेनान्याऽऽराधितोऽनिशम् ।
आकल्पान्तमदृश्येऽस्मिन्विमानेऽसौ वसिष्यति ।। ४ ।।

पहले वैवस्वत कृतयुग में वायुकी घोर तपस्या देखकर श्री भूमि सहित श्रीनिवास भगवान स्वामिपुष्करिणी तटपर चले आये और वायु के प्रसन्नार्थं इसी दक्षिण के पुण्यतम नन्द नामक विमान में श्रीकान्त भगवान निवास करने लगे। उसी समय से कार्तिकेय द्वारा आराधित हो कल्पपर्यन्त इसी पर्वतीय विमान में अदृश्य रूप से निवास करने लगे। (२-४)

धरण्युवाच :—

अदृश्यो भगवान्मर्त्यैः कथं दृश्यो भविष्यति

श्रीनिवासोऽपि देवेशो भवद्दक्षिणपार्श्वगः ।
'एतद्वद सुराधीश जनैराराध्यते कथम् ? ।। ५ ।।

धरणी देवी बोली—हे देव ! अदृश्य रूप भगवान मनुष्यों को कैसे दृश्य होंगे। हे सुराधीश ! आपके दक्षिण भाग में रहकर देवेश श्रीनिवास भी मनुष्यों से कैसे आराधित होते हैं। (५)

श्री वराह उवाच :—

अगस्त्योऽस्मिन्समासाद्य पुरा देवं सनातनम् ।
आराध्य द्वादशाब्दं तं प्रीणयित्वा पुनः पुनः ।। ६ ।।

ययाचे तत्र सान्निध्यं भवान् दृश्यो भवत्विति ।
एवमुक्तो हृषीकेशः श्रीभूमिसहितो धरे ।। ७ ।।

श्री भगवानुवाच :—

अहं दृश्यो भविष्यामि त्वत्कृते सर्वदेहिनाम् ।
एतद्विमानं देवर्षे न दृश्यं स्यात्कदाचन ।। ८ ।।

आकल्पान्तं मुनीन्द्रास्मिन्दृश्योऽहं नात्र संशयः ।
मुनिस्तद्वचनं श्रुत्वा प्रीतः प्रायात्स्वमाश्रमम् ।। ९ ।।

श्री वराहदेव बोले—हे पृथ्वी देवी! पहले यहाँ अगस्त्य ऋषि ने आकर सनातन भगवान की बारह वर्ष तक आराधना कर प्रसन्न करके भगवान की सान्निध्य तथा प्रत्यक्ष हो जाने के लिये बारंबार वर मांगा। ऐसा कहने पर श्री भूमि सहित हृषीकेश भगवान बोले "मैं तुम्हारे कारण सभी लोगों के समीप दृश्य होऊँगा, किन्तु हे देवर्षि! यह विमान कभी दृश्य न होगा। मैं अवश्य आकल्पान्त यहाँ मनुष्यों के दृश्य रहूँगा, इसमें सन्देह नहीं है। यह सुनकर ऋषि परम प्रसन्न हो अपने आश्रम को लौट आये। (६-९)

ततश्चतुर्भुजो देवः स दृश्योऽभून्नरादिभिः ।
विमाने मुनिचिन्त्येस्मिन्नासिता च तथोत्तरम् ।। १० ।।

आराध्यमानः स्कन्देन वायुना सेवितस्सदा ।

चतुर्भुज भगवान उसी समय से स्कन्द तथा वायु से सेवित होकर, केवल मुनियों से चिन्तनीय उस विमान में सभी मनुष्यों के दृश्य होकर रहने लगे। (१०)

## मित्रवर्मणः आकाशराजाख्यसुतोत्पत्तिवर्णनम्

एवं गते महाकाले चतुर्युगसमन्विते ।। ११ ।।

अष्टाविंशे तु सञ्जाते द्वापरान्ते वसुन्धरे ।
युद्धे च भारतेऽतीते तिष्ये सति युगे तथा ।। १२ ।।

विक्रमार्कादयो भूपाः शकाश्शूद्रादयस्तथा ।
गमिष्यन्ति स्वर्गलोकं मामज्ञात्वा वरानने ।। १३ ।।

ततस्सोमकुलोद्भूतो मित्रवर्मा महारथः ।
तुण्डीरमण्डले राजा नारायणपुरे वसन् ।। १४ ।।

भविष्यति वरारोहे ! महाभाग्योदयो महान् ।

चार महायुगों का महाकाल व्यतीत हो जाने पर हे वसुन्धरे! द्वापर के अन्त तथा अट्ठाइस कलि के व्यतीत एवं महाभारत युद्ध के समाप्त हो जाने पर, विक्रमार्क आदि अनेक शक तथा शूद्रक राजा मुझे न जानकर ही स्वर्ग चले जायेंगे। पीछे तुण्डीर-मण्डल के नारायणपुर में वास करनेवाले सोमवंश में मित्रवर्मा नामक महाभाग्यवान महारथी राजा होंगे। (११-१४)

तस्मिच्छासति भूलोकं धर्मेण पृथिवीपतौ ।। १५ ।।

अकृष्टपच्या पृथिवी सर्वसस्यविभूषणा ।
निरीतिकोऽभवत्सर्वो जनो धर्मसमन्वितः ।। १६ ।।

तस्य पत्नी समभवत्पाण्ड्यकन्या मनोरमा ।
तस्य जज्ञे कुलोत्तंसो वियन्नामा सुतोऽस्य वै ।। १७ ।।

तस्य पत्नी तु धरणी नाम्नाऽसीच्छकवंशजा ।
तस्मिन् राज्यं विनिक्षिप्य मित्रवर्मा नृपोत्तमः ।
ययौ तपोवनं पुण्यं वेङ्कटाद्रेः समीपतः ।। १८ ।।

हे वरारोहे! उस धर्मात्मा राजा के धर्म्म से भूलोक का शासन करते समय पृथ्वी मण्डल बिना जोते ही उपजानेवाला तथा सर्व सस्य सम्पन्न हुआ था। उसकी सभी धार्मिक प्रजा ईति या व्याधिरहित रहती थी। पांड्यकन्या मनोरमा—देवी उसकी पत्नी थी। उससे आकाश नामक पुत्र की उत्पत्ति हुई। इस आकाश कुमार की स्त्री शकवंशजा धरणीदेवी थी। नृपोत्तम राजा मित्रवर्मा इसी आकाश कुमार पर राज्यभार देकर परमपुण्य वेङ्काद्रि के तपोवन में चले गये। (१५-१८)

## धरणीतलात्पद्मावत्युपत्तिक्रमः

आकाशनामा तु महान् राजाऽभूत्सार्वभौमकः ।
एकदारव्रतो राजा धरणीसक्तचेतनः ।। १९ ।।

यज्ञार्थं शोधयामास भुवमारणितीरतः ।
काञ्चनेन हलेनैव कृष्यमाणे धरातले ।। २० ।।

बीजमुष्टिं विकिरता दृष्टा कन्या धरोद्गता ।
पद्मशय्यागता रम्या सर्वलक्षणलक्षिता ।। २१ ।।

तप्तजाम्बूनदमयी पुत्रिकेव विराजती ।

## पृथ्वी पर पद्मावती की उत्पत्ति

केवल धरणीदेवी में अनुरक्त तथा एकपत्नीव्रतवाले महाराज आकाश अब अखण्ड सार्वभौम राजा हो गये। उन्होंने आरणी नदी के किनारे की पृथ्वी को यज्ञार्थ सोने के हल से जीतना आरम्भ किया। जोती हुई पृथ्वी में मुट्टी पर बीज बोते ही राजा के भूमि से आविर्भूत, सर्वलक्षणसम्पन्न, तपाये हुए सोने की बनायी पुतली की तरह शोभित तथा कमलरूपशय्या पर सोयी हुई एक परम मनोहर कन्या दीख पड़ी। (१९-२१)

तां दृष्ट्वा स महीपालो विस्मयोत्फुल्ललोचनः ।। २२ ।।

आदाय 'तनयां चैवं ममै'वेति पुनः पुनः ।
जहर्ष मन्त्रिभिश्चैनं प्राह वागशरीरिणी ।। २३ ।।

'सत्यं तवैव तनया वर्धयस्व सुलोचनाम्' ।
ततः प्रीतमना राजा स्वपुरं प्रविवेश ह ।। २४ ।।

आहूय धरणीदेवीमिदमाह महीपतिः ।
देवदत्तमिमां पश्य भूतलादुत्थितां मम ।। २५ ।।

आवाभ्यां तदपुत्राभ्यां पुत्रीयं भविता ध्रुवम् ।
इत्युक्त्वा प्रददौ देव्या हस्ते प्रीत्या वियन्नृपः ।। २६ ।।

उस लड़की को आश्चर्यान्वित हो देख तथा लाकर "यह लडकी मेरी ही है" ऐसा बारम्बार कहते हुए मन्त्रियों के साथ राजा आनन्दित हुए, तब आकाशवाणी ने कहा कि सत्य ही यह आप ही की पुत्री है ; अतएव इस सुलोचना को तुम पालो। तदनन्तर प्रसन्न होकर राजा ने अपने महल में प्रवेश किया और अपनी स्त्री धरणीदेवी को बुलाकर कहा कि देवताओं से दी हुई पृथ्वीतल से उत्पन्न मेरी इस कन्या को देखो। हम दोनों अपुत्रों की यही पुत्री होगी, ऐसा कह आकाश राजा ने परम प्रीति से उसे देवी के हाथों में दे दिया। (२२-२६)

## आकाशराजस्य धरण्याख्यपत्न्यां वसुदानाख्यसुतोत्पत्तिः

तस्यां गृहं प्रविष्टायां धरणी गर्भमादधौ ।
वियन्नृपश्च सुप्रीतो वीक्ष्य स्निग्धां विलोचनाम् ।
उवाच फलिता सुभ्रूर्लता सान्तनिकी च मे ।। २७ ।।

अथ सा धरणी देवी काले कमललोचना ।
सुप्रशस्ते मुहूर्ते च स्वोच्चसंस्थेषु पञ्चसु ।। २८ ।।

गृहेषु सुषुवे पुत्रं मेषस्थे च दिवाकरे ।
देवदुन्दुभयो नेदुः पुष्पवृष्टिर्गृहेऽपतत् ।। २९ ।।

ववौ वायुस्सुखस्पर्शस्तज्जन्म दिवसे तदा ।
पुत्रसूतिप्रवक्तॄणां सुप्रीतः पुत्रजन्मनि ।। ३० ।।

सर्वस्वदानमकरोत् छत्रचामरवर्जितम् ।
कपिलाकोटिदानं च वृषभाणां शताधिकम् ।। ३१ ।।

दिवसे द्वादशे पुण्यं जातकर्मादिकाः क्रियाः ।
चकार नामधेयं च वसुदान इति स्वयम् ।। ३२ ।।

# आकाशराजा की धरणी नामक पत्नी से वसुदान नामक पुत्र की उत्पत्ति

उसके घर में प्रवेश करते ही धरणी देवी ने गर्भ धारण किया। सुन्दर नेत्रवाली देवी को देखकर आकाश राजा परम प्रसन्न हो बोले कि आज मेरी सन्तान हेतु शोभनभ्रूवाली सुन्दर लता सफल हुई। तब कमल के समान नेत्रवाली उस धरणी देवी ने अत्यन्त शुभ मुहूर्त में पाँचों शुभ ग्रहों के उच्च स्थान में बैठने पर तथा मेष की संक्रांति में पुत्र रत्न प्रसव किया। देवताओं की दुन्दुभियाँ बजा तथा घर में पुष्पों की वृष्टि हुई। उसके जन्म दिन में सुखस्पर्श वायु बहने लगी। पुत्र जन्म के उपलक्ष में पुत्रोत्पत्ति के बारे में पूछनेवाले सबों को प्रसन्न होकर स्वयं राजा ने, छत्र तथा चामर (राजचिन्ह) को छोड़कर सर्वस्वदान कर दिया। करोड़ों कपिल गायों एवं सौसे अधिक साढ बैलों का दान किया और पवित्र बारहने दिन जातकर्मादि क्रिया कर स्वयं राजा ने वसुदान, ऐसा नामकरण भी किया।

(२७-३२)

**श्री वराह उवाच :—**

आकाशतनयो देवि ! वसुदानो मनोरमः।
ववृधे दिवसैर्बालः शुक्लपक्ष इवोडुराट् ॥ ३३ ॥

उपनीतो विनीतोऽसौ गुरुभिर्ब्रह्मपारगैः।
पितुरस्त्राणि शस्त्राणि मन्त्रवत्सोऽप्यशिक्षत ॥ ३४ ॥

चतुष्पादं धनुर्वेदं साङ्गोपाङ्गमधीतवान्।
पिता तेनातिबलिना दुराधर्षः परैरभूत् ॥ ३५ ॥

आकाश इव निष्पङ्को ग्रीष्मे भानुमता युतः।
वैशाख इव मध्याह्ने दुस्सहो दुर्निरीक्षकः ॥ ३६ ॥

श्री वराह भगवान बोले— हे देवि ! आकाश राजा का परम मनोहर लड़का बालक वसुदान दिनों दिन शुक्ल पक्ष के चंद्रमा के समान बढ़ने लगा। परम

विनीत वह ब्रह्मवेत्ता गुरुओं से उपनीत हुआ। पिता से अस्त्रों तथा शस्त्रों को उसने मन्त्रपूर्वक सीख लिया। चार शाखा के धनुर्वेद को भी सांगोपांग पढ़ लिया। उस परम बलवान पुत्र के कारण पिता (आकाश राजा) शत्रुओं से दुराधर्ष, तथा वैशाख मास के दोपहर में सूर्य से युक्त आकाश के समान निर्मल और दुर्निरीक्ष्य हो गये। (३३-३६)

इति श्रीवाराहपुराणे भूगोलोपाख्याने धरणीवराहसंवादे श्रीवेङ्कटाचलमाहात्म्ये उत्तरार्धे अगस्त्यप्रार्थनया भगवतः सर्वजनदृग्गोचरत्वादिवर्णनं नाम तृतीयोऽध्यायः।

## चतुर्थोऽध्यायः

## उद्यानवासिन्याः पद्मावत्याः समीपे नारदागमनम्

**धरण्युवाच :—**

उक्तं भगवता तस्य वियत्पुत्रस्य नाम च ।
अयोनिजायास्तत्पुत्र्याः किं नाम च तदाऽकरोत् ।। १ ।।

वियतराज कन्या जनम नामकरण संस्कार ।
पद्मावती यह भाग में नारदमुनि संचार ।। १ ।।

सामुद्रिक लक्षणकथन विपिनगमन सखिसंग ।
पद्मावति सह मिलन तहं, प्रभु शिकार के ढंग ।। २ ।।

## उद्यानवासिनी पद्मावती देवी के निकट श्री नारदजी का आगमन

धरणी देवी ने पूछा कि आकाश राजा के पुत्र का नाम तो आप से ही कहा गया, पर बिना गर्भवास के उत्पन्न हुई उस पुत्री का नाम क्या रखा? (१)

**श्रीसूत उवाच :—**

इति पृष्टः पुनः प्राह श्रीवराहो जगत्पतिः ।

श्री सूतजी बोले :—यह पूछने पर जगत्पति श्री वराह भगवान पुनः बोले ।

**श्रीवराह उवाच :—**

'आकाशराजो मतिमांस्तां दृष्ट्वा कमलेशयाम् ।। २ ।।

पद्मिनी'ति च नाम्ना वै चकार वसुधासुताम् ।
तां तु यौवनसम्पन्नां सखीभिः परिवारिताम् ।। ३ ।।

आरामे विहरन्तीं च शुककोकिलनादिते ।
यदृच्छयाऽऽगतस्तत्र नारदो मुनिसत्तमः ।
वनलक्ष्मीमिवालोक्य विस्मयादिदमब्रवीत् ।। ४ ।।

श्री वराहजी बोले—उस कमलशायिनी कन्या को देखकर मतिमान आकाश राजा ने उस पृथ्वी-पुत्री का नाम पद्मिनी रखा। उस यौवनसम्पन्ना, सखिगणों से घिरी हुई शुक तथा कोयलकूजित बगीचे में विहार करती हुई पद्मिनी के पास एक दिन अकस्मात मुनिसत्तम नारदजी आ गये और वनलक्ष्मी के समान उसको देखकर आश्चर्य से यह बोले। (२-४)

नारद उवाच :—

काऽसि कस्य सुता भीरु ! हस्तं दर्शय मे तव' ।
इत्युक्ता सा सुचार्वङ्गी स्वात्मानं मुनयेऽब्रवीत् ।। ५ ।।

'वियद्राजसुता ब्रह्मन् ! लक्षणानि वदस्व मे' ।
इत्युक्तस्स तदा प्राह नारदो मुनिसत्तमः ।। ६ ।।

नारदजी ने बोले—तुम कौन हो ? किसकी पुत्री हो ? हे भीरु ! अपना हाथ मुझको दिखाओ। ऐसा कहे जाने पर वह सुन्दर शरीरवाली अपने विषय में मुनि से कही कि—हे ब्राह्मण ! मैं आकाश राजा की कन्या हूँ, मेरे लक्षणों को कहिये। (५-६)

## नारदोदीरितपद्मावतीशरीरलक्षणानि

नारद उवाच :—

'शृणु त्वं चारुवदने लक्षणानि वदामि ते ।
पादौ प्रतिष्ठितौ सुभ्रु ! रक्तपद्मदलान्वितौ ।। ७ ।।

पादाङ्गुल्यः समारक्ता रक्ततुङ्गनखान्विताः ।
गुल्फौ गूढौ समावेतौ जङ्घे चारोमशे शुभे ।। ८ ।।

जानुनी समसुस्निग्धे समावूरु क्रमादुरु ।
नितम्बौ पृथुलौ पीनौ जघनं चिन्त्यमेव हि ।। ९ ।।

नाभिर्मण्डलवान्निम्नः पार्श्वौ ते मेचकावुभौ ।
त्रिवलीललितं मध्यं रोमराजिविराजितम् ।। १० ।।

स्तनौ पीनौ घनौ स्निग्धावुन्नतौ मग्नचूचुकौ ।
करौ ते रक्तपद्माभौ पद्मरेखासमन्वितौ ।। ११ ।।

सुसूक्ष्मौ रक्तसत्पर्वनिरन्तरसमाङ्गुली ।
शुकतुण्ड समाकारनखपङ्क्तिविराजितौ ।। १२ ।।

दीर्घौ च कोमलौ भद्रे भुजौ ते पुष्पदण्डवत् ।
पृष्ठं ते वेदिवद्भाति विलग्नमृजुमध्यमम् ।। १३ ।।

कण्ठस्तु रक्तो दीर्घश्च स्कन्धौ चावनतौ शुभे ।
मुखं प्रसन्नं सततमकलङ्कशशिप्रभम् ।। १४ ।।

कपोलौ कनकादर्शसदृशौ कुण्डलोज्ज्वलौ ।
तिलपुष्पसमाकारा नासिका ते शुभानने ।। १५ ।।

अकलङ्काष्टमीचन्द्रसदृशोऽतिमनोहरः ।
दृश्यतेऽयं ललाटस्ते नीलालकसुशोभितः ।। १६ ।।

मूर्धा ते समवृत्तश्च स्निग्धाऽऽयतकचान्वितः ।
स्मितसंशोभिदशनं बिम्बाधरसमन्वितम् ।। १७ ।।

मुखं ते विष्णुयोग्यं स्यादिति मे निश्चिता मतिः ।
नाभिस्ते दक्षिणावर्त आवर्त इव गाङ्गजः ।
त्वं हि क्षीराब्धिसम्भूता लक्ष्मीरिव हि दृश्यसे' ।। १८ ।

नारद जी बोले—हे चारुवदने ! तेरे लक्षण तुझसे कहता हूँ, सुनो। हे सुन्दर भृकुटीवाली ! तुम्हारे दोनों पैर सुन्दर स्थिर लाल कमलदल के समान हैं, पैर की अंगुलिया एकरुप लील-लाल ऊँचे-ऊँचे नखयुक्त हैं। दोनों गुल्फें समान तथा गूढ़ हैं। दोनों जांघे रोमहीन तथा सुन्दर हैं। दोनों छुटने समान तथा चिकने हैं। दोनों ऊरु सम एवं क्रम से सुडौल हैं। नितम्ब (चुतड) मांस पूर्ण, फैले, मोटे, पुष्ट तथा दर्शनीय है। नाभी मंडलवाली तथा गहरी है। उदर अतिसूक्ष्म है। तेरी दोनों बगलें सफेद हैं। मध्य भाग (कमट, पेट) सुन्दर त्रिवली रेखा युक्त तथा रोमश्रेणि सुशोभित है। दोनों स्तन पीन, बड़े बड़े सघन चिकने उठे हुए तथा उनकी चूंचिया धसी हुई हैं। तेरे दोनों हाथ लाल कमल की प्रभा युक्त, पद्मरेखा युक्त, पतले-पतले सुन्दर पोरयुक्त, अविरल समान अंगुलिया युक्त तथा शुक के ठोर के समान आकारवाले नख पंक्ति युक्त सुशोभित हो रहे हैं। तेरी दोनों भजारा लम्बी, कोमल तथा फूलों के डंडों के समान हैं। तेरी पीठ वेदी के समान सीधी तथा चपकी हुई सरल कमरवाली है। तेरा कंठ लाल, लम्बा तथा सुन्दर है। तेरे कन्धे नीचे नये हुए तथा सुन्दर हैं। मुख प्रसन्न एवं सदा निष्कलङ्क चन्द्रमा के समान प्रभावाला है। दोनों कपोलकुण्डलों से प्रकाशित और सुवर्ण के शीशे के समान हैं। हे सुन्दर मुखवाली ! तेरी नासिका तिल के फूल के समान आकारवाली है, तेरा ललाट पट निष्कलङ्क, अष्टमी के चन्द्रमा के समान, मनोहर एवं नीले अलकावलियों से सुशोभित दीखता हैं। तेरा मस्तकसम तथा गोल, चिकना, चौड़ा एवं केशपाशयुक्त है। मन्द मुसकान युक्त सुन्दर दांतवाल, कुन्दरु के समान ओठ से युक्त तेरा मुख तो विष्णु के ही योग्य होगा, यही मेरी निश्चित बुद्धि है। तेरी दक्षिणावर्ता नाभी गंगाजी के भँवर के समान है; तुम क्षीरसागारोत्पन्ना साक्षात लक्ष्मी के समान दीखती हो। (७-१८)

## पद्मावत्याः स्वसखीभिस्साकं पुष्पवाटिकागमनम्

**श्रीवराह उवाच :—**

इत्युक्त्वा पूजितस्ताभिर्नारदोऽन्तर्दधे तदा ।
एत च्छ्रुत्वाऽथ तत्सख्यस्तामूचुः पद्मिनीं सखीम् ॥ १९ ॥

'वनं गच्छाम पुष्पार्थं वसन्तस्समुपागतः ।
कर्णिकाराश्च चूताश्च चम्पकाः पारिभद्रकाः ॥ २० ॥

कोई देवता का पूजन (सम्मान) करता है, तो कोई देवता द्वारा पूजा जाता है। हनुमान के द्वारा पूजित होवे पर भी भगवान स्वयं अर्जुन की पूजा (सारथ्य द्वारा) करते है। भगवान के विचित्र और मनुष्यों को पवित्र करनेवाले खेल को कौन वर्णन करे? क्योंकि इस नित्य और शुद्ध विष्णु के अभिवादन करने से ऋषियों को भी पुण्य और नहीं करने से दोष का सञ्चय होता है। इसलिये सब तत्वज्ञानी ऋषियों, राजाओं, पितरों, ब्रह्मणों, मनुष्यों एवं जड़ राक्षसों सभी से श्रीहरि पूजे, जाने योग्य हैं। (४९)

कलौ कलुषचित्तानां पापाचाररतात्मनाम् ।
रक्षणार्थं रमाकान्तो रमते प्राकृतो यथा ।। ५० ।।

दैत्यानां मोहनार्थाय सुराणां मोदनाय च ।।
क्रीडते बालकैर्बालो जगत्पालकबालकः ।। ५१ ।।

जगन्मोहनसौन्दर्यलीलामानुषविग्रहः ।।
नैतद्रूपं कृतं देवैर्न कृतं विश्वकर्मणा ।। ५२ ।।

स्वेच्छया क्रीडते तत्र स्वेच्छारूपविराजितः ।।

कलियुग में कलुषित चित्तवाले एवं पापकर्म में लगे हुए जीवों की रक्षा के लिये लक्ष्मीपति प्राकृत मनुष्यों कि जैसा रमण करते हैं। संसार को मोहन करनेवाले, सौंदर्य युक्त, लीला से ही मनुष्य का शरीर धारण करवेवाले एवं संसार का पालन करनेवाले भगवान दैत्यों को मोहन करवे और देवताओं को आनन्द देवे के लिये बालकों के साथ खेलते हैं। यह रूप न तो देवताओं के द्वारा बनाया गया है और न विश्वकर्मा ही के द्वारा, अपनी इच्छा से ही रूप धारण कर, वहाँ अपनी इच्छा से ही क्रीड़ा करते हैं। (५२)

क्षेत्रस्य महिमा दिव्यस्तथा तीर्थस्य वैभवम् ।। ५३ ।।

तत्र साक्षाद्रमाकान्तः किं तत्र सुकृतं कृतम् ।।
बहुजन्मार्जितैः पुण्यैर्लभ्यते क्षेत्रदर्शनम् ।। ५४ ।।

तत्रापि वेङ्कटगिरेर्दर्शनं मुक्तिदं परम् ॥
दुर्लभे देवसङ्घानां मनुष्याणां तु का कथा ॥ ५५ ॥

इति श्रीभविष्योत्तरपुराणे श्रीवेंकटाचलमाहात्म्ये पद्मावतीपरिणयोपोद्घातादिवर्णनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

इस क्षेत्र का माहात्म्य और तीर्थों का वैभव (दिव्य) अलौकिक है। जहाँ पर साक्षात लक्ष्मीपति है, वहाँ पर पुण्य की तो बात हीं क्या है। बहुत जन्म में उपार्जित पुण्य से क्षेत्रों के दर्शन मिलते हैं। तिसपर भी श्रीवेंकटाचल का मुक्ति देनेवाला दर्शन देवताओं को भी दुर्लभ है, मनुष्य की तो बात ही क्या? (५५)

# षष्ठोऽध्यायः

मृगया हित प्रस्थानके, प्रभु भूषण आख्यान ।
मृगया पथ कन्या मिलन, नभसुत चिन्तावान ।। १ ।।

धरा जन्म पद्मावती, नभ नृप सुत वसुदान ।
पद्मावती लक्षण कथन, नारद ज्ञाननिधान ।। २ ।।

## मृगयाविहारोद्युक्त श्रीनिवासालङ्कारवर्णनम्

**सूत उवाच :—**

स कदाचिद्रमेशस्तु चिन्तयामास वै हयम् ।।
मनसा चिन्त्यमाने तु हयः प्रत्यक्षतां गतः ।। १ ।।

वायुरश्वत्वमापन्नो रज्जुस्तत्त्वाभिमानिनी ।।
उपासर्पत्स्वयं लक्ष्मीस्ततोऽश्वं तं स पूजयन् ।। २ ।।

तस्योपरि समातिष्ठत्सर्वाभरणभूषितः ।

## मृगया के उपयुक्त श्रीनिवास के अलंकारों का वर्णन

सूत जी बोले—उस लक्ष्मीपति ने किसी समय में घोड़े की चिन्ता की। मन से चिन्ता किये जाने पर ही एक घोड़ा प्रत्यक्ष हो गया। वायु ने घोड़े का रूप धारण किया। तत्त्वो की अधिष्टात्री देवी लक्ष्मीजी स्वयं रस्सी होकर समीप आयीं। सब आभूषणों से शोभित वह लक्ष्मीपति उस घोड़े की पूजा करते हुए उसके ऊपर बैठे गये। (२)

शुभ्रं वस्त्रं पञ्चदशहस्तं बिभ्रत्तथोपरि ।। ३ ।।

काञ्चीं बद्ध्वा रमाकान्तः काञ्चीदामविभूषितः ।
शुभ्रवर्णं चोत्तरीयं पञ्चहस्तं तथा दधत् ।। ४ ।।

आदर्शालोकिते वक्त्रे धृत्वा शुभ्रां च मृत्तिकाम् ।
तन्मध्ये कुङ्कुमेनापि तिलकं सुमनोहरम् ।। ५ ।।

पूगीफलं च ताम्बूलं चूर्णनिःक्षेपपात्रकम् ।
कर्पूरवासितैः पूगकाचैर्जातीफलैः शुभैः ।। ६ ।।

लवङ्गैः पत्रसम्मिश्रैर्गर्भितां रत्नपेटिकाम् ।
आदर्शमृत्तिकां शुभ्रां तथा कुङ्कुमभाजनम् ।। ७ ।।

स्वर्णनिर्मितवस्त्रेण बद्ध्वा तु कटिमध्यतः ।
स्वर्णयज्ञोपवीताङ्गः कण्ठाभरणभूषितः ।। ८ ।।

कङ्कणाङ्कितदोर्भ्यां च सम्पूर्णवरगात्रकः ।
भुजकीर्त्या रत्नमय्या राजमानोऽङ्गुलीयकैः ।। ९ ।।

कुङ्कुमाक्तसुगन्धेन लिप्तोरोबाहुरञ्जितः ।
कबरीकृतकेशेषु रक्तवस्त्रं सुवेष्ट्य च ।। १० ।।

लम्बितैः पुष्पजालैश्च स्कन्धगैः परिभूषितः ।
सुवर्णरत्नसम्बद्धपादुकागूहितांघ्रिकः ।। ११ ।।

धनुर्बाणधरः श्रीमान्साक्षान्मन्मथमन्मथः ।
एवं मनोहरं रूपं धृत्वा श्रीवेङ्कटेश्वरः ।। १२ ।।

हयं रत्नसमाकीर्णैरुपबर्हैर्विभूषितम् ।
सुवर्णतिलकोल्लासिवक्त्रं वायुमनोजवम् ।
नीलवर्णं पाण्डुपादं हस्तपञ्चदशोन्नतम् ।। १३ ।।

आरुह्य देवमण्यादि सर्वलक्षणसंयुतम् ।
अवरुह्य गिरिश्रेष्ठान्मृगयार्थं जगाम सः ।। १४ ।।

पन्द्रह हाथ का शुभ्र वस्त्र पहनकर, उसके ऊपर कटि में रस्सी के चिह्नवाले (दामोदर) लक्ष्मीपति ने करधनी पहन, स्वच्छ वर्ण और पांच हाथ का एक उत्तरीय दुपट्टा भी धारण कर, दर्पण में मुख देखकर, स्वच्छ मृत्तिका का सुन्दर तिलक धारण कर एवं उसके बीच में कुंकुम का एक बिन्दु देकर, पूगीफल (सुपारी), ताम्बूल, चूना रखने का पात्र, कर्पूर से सुगन्धित उत्तम जातीफल (जावित्री), लवग एवं जातीपत्र में मिलाकर लगाये हुए बोड़ों की एक रत्न की पेटी, दर्पण, स्वच्छ मृत्तिका तथा कुंकुम की डिबिया इन सबों को स्वर्ण के बने हुए वस्त्र से कमर में बन्धकर, स्वर्ण का यज्ञोपवीत पहने हुए, कण्ठ के आभूषण से शोभित, कंकण से सजे हुए बाहुओं से सम्पूर्ण श्रेष्ठ अंगवाले, अंगुलियों में रत्नमयी भुजकीर्ति-रूप रत्नजटित सुवर्ण की अंगूठियों से विराजमान्, कुंकुमयुक्त सुगन्धि से लपेटे हुए, हृदय और बाहुबलि, केशों में कबरी (चोटी) बना, लाल वस्त्र लपेटकर, कन्धातक लम्बे फूल की माला से शोभित, सुवर्ण और रत्नों से जड़ी हुई पादुका पैर में पहने हुए तथा धनुष-बाण धारण किये हुए, श्रीमान्, साक्षात् कामदेव के भी कामदेव जैसा मनोहर रूप धारण करके श्रीवेंकटेश भगवान्, रत्न से भरे हुए आच्छादन (चारजामा) से शोभित, सुवर्ण-तिलक से शोभित मुखवाले, वायु और मन के समान वेगवाले, नीलवर्ण एवं पीले पैरवाले पन्द्रह हाथ ऊँचे घोड़े पर चढ़कर मणि आदि सब लक्षणों से संयुक्त देवश्रेष्ठ पर्वत पर से उतरकर मृगया के लिये गये। (१४)

## मृगयाविहारसमये श्रीनिवासस्य कन्यादर्शनम्

मृगान्बहुविधाकारान् सिंहशार्दूलजम्बूकान् ।
मातङ्गाञ्छरभान्घोरांस्तथा वै महिषानपि ।। १५ ।।

जघान तान् वने देवः संचरन् स इतस्ततः ।
तत्रैकं हस्तिनं दृष्ट्वा मदोन्मत्तं वनेचरम् ।। १६ ।।

तं हन्तुमगमत्पृष्ठमनुसृत्य रमापतिः ।
स जगाम वने दूरं भयाद्भीतो वृषाकपिः ।। १७ ।।

स योजनार्धं गत्वा तु तत्र देवं जनार्दनम् ।
दण्डवत्पतितो भूत्वा शुण्डामुद्धृत्य गर्जयन् ।
यदा गतस्तदा कन्या दृष्टिमार्गमुपाश्रिता ।। १८ ।।

# मृगया के समय में श्रीनिवास का कन्या देखना

उन्होंने इधर-उधर घूमकर बहुत तरह के हरिण, सिंह, शार्दूल, जम्बुक, हाथी, घोर, शरभ तथा भैंसों के उस वन में मारा। वहाँ एक मद से उन्मत्त वनचर हाथी को देखकर उसको मारने के लिए लक्ष्मीपति उसके पीछे-पीछे गये। वह भगवान् से बहुत भयभीत होकर, जंगल में दूर चला गया। आधा योजन जाने पर हाथी शुण्ड उठा जनार्दन भगवान् को दण्डवतकर, गर्जता हुआ जब चला गया, तभी एक कन्या दृष्टिगोचर हुई। (१८)

ऋषय ऊचु :—

'सा कन्या कस्य सम्बद्धा किमर्थं वनमागता ? ।
कस्येयं तनया कन्या तद्वदस्व महामुने ॥ १९ ॥

इति तैश्च स विज्ञप्तः सूतः परमधार्मिकः ।
उवाच वचनं भक्त्या सन्तोषाद्युक्तमानसः ॥ २० ॥

ऋषि बोले—"हे महामुनि, वह कन्या वहां जंगल में क्यों आयी तथा वह कन्या किसकी पुत्री थी, सो हमसे कहिये। इस प्रकार उनसे कहे जाने पर परम धर्मात्मा सूतजी सन्तुष्ट मन होकर भक्तिपूर्वक वचन बोले। (२०)

श्रीसूत उवाच—

श्रुण्वन्तु मुनयः सर्वे कन्याया जन्म पावनम् ।

श्री सूतजी बोले—हे मुनिगण! कन्या के पवित्र जन्म को सुनिये।

पुरा तु द्वापरस्यान्ते पाण्डवानां महात्मनाम् ॥ २१ ॥

युद्धे तु भारतेऽतीतेत्वष्टाविंशे कलौ युगे ।
विक्रमार्कादयो भूपाः स्वर्गलोकं यदा ययुः ॥ २२ ॥

तत्कालान्ते वत्सरेषु साहस्रेषु गतेषु वै ।
चन्द्रवंशे नृपः कश्चित्सुवीर इति विश्रुतः ॥ २३ ॥

जज्ञे सुधर्मस्तत्पुत्रस्तत्सुतौ नृपपुङ्गवौ ।
आकाशतोण्डमानाख्यौ जातौ लोकयशस्करौ ।। २४ ।।

धर्मिष्ठौ दृढभक्तौ तु नारायणपरायणौ ।
ज्येष्ठो वियन्नृपः साधुः कनिष्ठस्तोण्डमान्नृपः ।। २५ ।।

तोण्डदेशाधिपो भूत्वा शशास पृथिवीमिमाम् ।

पहले द्वापर के अन्त में महात्मा पाण्डवों के महाभारत युद्ध के बीत जाने पर अट्ठाईसवें कलियुग में जब विक्रमादित्य इत्यादि राजा स्वर्गको चले गये, उसी समय के अन्त में हजार वर्ष बीतने पर चन्द्र वंश में कोई एक सुवीर नामक प्रसिद्ध राजा हुआ। उसका पुत्र सुधर्म हुआ। संसार में यशस्वी, धर्मात्मा, दृढ़भक्त, नारायण के पारायण एवं राजाओं में श्रेष्ठ आकाश और तोण्ड नाम के उसके दो पुत्र हुए। उनमें सज्जन आकाश बड़ा था और तोण्ड राजा छोटा। आकाशराज तोण्ड देश का स्वामी होकर इस पृथ्वी का शासन करने लगे। (२५)

तस्मिञ्छासति भूचक्रमिदं स्वर्ग इवाभवत् ।
निरातङ्कमभूत्सर्वं जगत्स्थावरजङ्गमम् ।। २६ ।।

गावो बहुपयोदाश्च नार्यः पतिपरायणाः ।

उनके शासन के समय में यह भूमण्डल स्वर्ग के तुल्य हो गया। संसार के स्थावर और जंगम सभी निर्भय हो गये। गौएँ बहुत दूध देनेवाली और स्त्रियाँ पतिव्रता थीं। (२६)

कदाचित्पुत्रकांक्षी स ह्येकान्ते भवने स्थितः ।
अपुत्रो नृपतिर्दुःखात् गुरुं प्रोवाच भक्तितः ।। २७ ।।

किसी समय वह अपुत्र राजा पुत्र के इच्छुक हो दुःखी होकर एकान्तभवन में गुरु से भक्तिपूर्वक बोले। (२७)

## पुत्रालाभेन वियन्नृपानुभूतचिन्ताप्रकारः

**आकाशराज उवाच—**

'अनुभूतमिदं राज्यं हस्त्यश्वरथसङ्कुलम् ।
नानादानमकार्षं च तीर्थयात्रां विशेषतः ।। २८ ।।

नानुभूतं पुत्रसुखं पितॄणां मुक्तिदं द्विजः ! ।
किं मयाचरितं पापं कस्य पुत्रो हतः पुरा ! ।। २९ ।।

केन पापेन विप्रेन्द्र ! प्राप्तं पुत्रजन्म मे ।
नेत्राभ्यां नैव दृष्टं च पुत्रस्य मुखपङ्कजम् ।। ३० ।।

कर्णाभ्यां न श्रुतः शब्दः पुत्रेण रुदता कृतः ।
द्विजेन्द्रपितृबन्धूनां दुर्गतिश्च भवेत्तथा ।। ३१ ।।

## पुत्रलाभ ने होने से आकाश राजा की चिन्ता

आकाश राजा बोले—हाथी, घोड़े और रथ से भरे हुए इस राज्य का अनुभव मैंने किया है ; नाना प्रकार के दान तथा विशेष करके तीर्थ यात्रा भी मैंने की है । हे द्विज ! पितृगणों को मुक्ति देनेवाला पुत्र-सुख का मैंने अनुभव नहीं किया । मुझ से कौन पाप हुआ है ? पहले मैंने किसके पुत्र को मारा था ? हे विप्रेन्द्र ! किस पाप से मुझे पुत्र उत्पन्न नहीं हुआ ? नेत्र से मैंने पुत्र का मुख कमल नहीं देखा और कानों से पुत्रों के रुदन शब्द को भी नहीं सुना । हे द्विजेन्द्र ! इस प्रकार तो पितरों की दुर्गति ही होगी । (३१)

अपुत्रस्य गतिर्नास्तीत्येवं वेदविदो विदुः ।
पुत्रेण रुक्मपात्रे तु नान्नं भुक्तं मया सह ।। ३२ ।।

कृतदोषेण न मया कदाचिल्लालितः सुतः ।
भूषणान्यादरात्कृत्वा न पुत्रोऽलङ्कृतो मया ।। ३३ ।।

स सञ्जातो न मे यः स्यात्पुत्रः पितृहिते रत. ।
सुतार्थं कवचं कृत्वा त्वमेहीति स नोदितः ।। ३४ ।।

पुत्रहीनं च मां दृष्ट्वा कर्षन्ति यमकिङ्कराः ।
गच्छ राजञ्जवेनैव यमस्य भवनंत्विति ।। ३५ ।।

पाशकुण्ठितसर्वाङ्गः किमु वक्ष्याम्यपुत्रवान् ? ।
चित्रगुप्तेन लिखितमपुत्रत्वं महामते ! ।। ३६ ।।

अपुत्रों की गति नहीं होती, ऐसा वेदज्ञ कहते हैं; पुत्र के साथ सुवर्ण पात्र में मैंने अन्न भोजन नहीं किया है। मुझ पापी से कभी भी पुत्र का लालन-पालन नहीं हुआ। आदर करके मुझ से पुत्र को आभूषण नहीं पहनाया गया। जो पुत्र पिता की भूलाई में लगा रहता है वह मुझ को नहीं हुआ। पुत्र के लिए कवच बनाकर, तुम यहाँ आओ ऐसा वह नहीं कहा गया। मुझ पुत्रहीन को देखकर यमदूत "हे राजन्! शीघ्र ही यमराज के घर चलो" कहते हुए खींचते हैं। पाश से जकड़े हुए सब अंगवाला, बिना पुत्र का, मैं क्या कहूँ? हे महामते! चित्रगुप्त द्वारा मेरी अपुत्रता लिख दी गयी हैं। (३६)

मद्गर्भजेन सुकुलं मार्जितं तु कदा भवेत् ? ।
दुराचारोऽसि दुर्बुद्धिरपुत्रेति यमेन च ।। ३७ ।।

भाषितं वचनं श्रुत्वा कः पुमान्सुखमाप्नुयात् ? ।
नष्टदीपोऽतिनैष्ठुर्यः कण्टोद्भूतकलेबरः ।। ३८ ।।

वृथा जातोऽतिपापात्माऽस्म्यात्मनो नरकावहः ।
तन्तुहीनं कुलं चापि विगताम्बुञ्च वापिकाम् ।। ३९ ।।

अङ्गना भर्तृहीना च सन्तो निन्दन्ति संसदि ।
किं करोमि महीदेव क्व गच्छामीह का गतिः ? ।। ४० ।।

कं देवं शरणं गत्वा भवाब्धि प्रतराम्यहम् ।

गर्भ से उत्पन्न हुए पुत्र से मेरा सुन्दर कुल कब सुशोभित होगा? "तू दुष्ट बुद्धिवाला, दुराचारी एवं अपुत्र है" इस प्रकार से यमराज के कहे हुए वचनको सुनकर कौन पुरुष सुखी हो सकता है?" दीपक भुक्ता हुआ, बहुत निष्ठुर, कष्ट से उत्पादित शरीरवाला एवं अपने को नरक में ले जानेवाला पापात्मा, तू व्यर्थ पैदा हुआ; तन्तुहीन (पुत्रहीन) कुल, बिना जलकी बावड़ी तथा विधवा स्त्री को छोड़ दो" ऐसा सज्जनगण भी सभा में निन्दा करते है। हे भूदेव। क्या करूँ? कहाँ जाऊँ? किस देवता की शरण में जाकर संसार—समुद्र पार हो जाऊँगा। (४०)

रुदन्तं पुत्रमालोक्य कदा प्रेम्णा तमाह्वये ॥ ४१ ॥

घण्टां च प्रतिमां दत्त्वा पुत्रस्य फलकन्दुकौ ।
गजमारोप्य मां तात ! कुर्वन्ग्रामप्रदक्षिणम् ॥ ४२ ॥

सभां गच्छाथ राजेन्द्र ! तथा तालस्वनेन च ।
इति पुत्रेण सोत्कण्ठं कृता मञ्जुलभाषिणा ॥ ४३ ॥

कदाचिदपि नैवाहं श्रुतवान्प्रार्थनामिति ? ।
अजातपुत्रः शोकेन मूर्च्छामाप महीपतिः ॥ ४४ ॥

रोते हुए पुत्र को देखकर कब प्रेम से उसको घंटा, पुतली, फल और गेन्द देकर बुलाऊँगा? "हे तात! हे राजेन्द्र! मुझ को हाथी पर चढ़ाकर गाँव की प्रदक्षिणा कराते हुए ताली बजा सभा में जाइये"—इस प्रकार मधुर बोलनेवाले पुत्र से उत्कण्ठपूर्वक की गयी प्रार्थना को मैंने कभी भी नहीं सुना, ऐसा कहते हुए अजातपुत्र वह आकाश राजा शोक से मूर्छित हो गये। (४४)

पुनः संज्ञामवाप्याथ विललाप सुदुःखितः ।
कवचं कारयित्वा तु शिरोभूषणमप्यथ ॥ ४५ ॥

केशभूषणमप्यर्थं रत्नवज्रसमाकुलम् ।
कदाचिदङ्कमारोप्य न मयालङ्कृतः सुतः ॥ ४६ ॥

नोपनीतोऽपि च प्रीत्या सुतो मे पञ्चवार्षिकः ।
अष्टमे वाऽथ दशमे न कृतो दारसंग्रहः ।। ४७ ।।

बालस्य जातकर्माऽपि नाकार्षं नापि चाभिधाम् ।
पुत्रार्जितं धनं ब्रह्मन्नोपजीवितमद्य मे ।। ४८ ।।

अभिषिच्य सुतं राज्ये भार्यया कृतभोजिना ।
न गतं च वनं विद्वन् ! पारम्पर्यक्रमान्मया ।। ४९ ।।

अहो दरिद्रस्य महानुभाव ! मे पुत्रेण हीनस्य कथं गतिर्भवेत् ।
वृथा शरीरं घटकुड्यसन्निभं जातं सुधर्मस्य कुले सुपावने ।। ५० ।।

सचेत होकर वह दुःखी राजा पुनः विलाप करने लगे—केश को बहुत ही भूषित करनेवाले, रत्न और वज्रों से जटित शिरका आभूषण (मुकुट) एवं कवच बनवाकर गोद में बैठा, मुझसे पुत्र कभी भी नहीं सजाया गया, पञ्चम वर्ष में मैंने पुत्रका उपनयन भी प्रीतिपूर्वक नहीं किया, अष्टम अथवा दशम वर्षमें मैं ने उसका विवाह भी नहीं करवाया । * बालकका जातकर्म और नामकरणसंस्कार भी मैं ने नहीं किया । पुत्रका उपार्जन किया हुआ धन् हे ब्रह्मन् । मैं ने आजतक नहीं भोगा । हे विद्वन् ! सब प्रकारके भोग भोग चुकनेवाले मुझसे और मेरी पत्नी से परम्पराके क्रमके अनुसार पुत्रका राज्याभिषेक करके वनगमन नहीं हुआ ! हे महानुभाव ! मुझ दरिद्र और पुत्रहीन की गति कैसे होगी ? सुधर्म के सुन्दर और पवित्र कुलमें मेरे शरीरने घड़े और भीतके समान व्यर्थ ही जन्म लिया । (५०)

मनुष्याणामनाथानां दुर्लभं पुत्रजन्म च ।
बहुपुण्यवशात्पुत्रो जायते मानवोदरे ।। ५१ ।।

* "पञ्चमे वीर्यकामस्य" मनुके इस वचनसे पञ्चम वर्षमें उपनयन शास्त्रसम्मत है । "प्रतिवेदं ब्रह्मचर्यं द्वादशब्दानि पञ्चवा" यज्ञवल्क्यके इस वचन से उपनयनके अनन्तर पांच वर्षतक अथवा ग्रहणपर्यन्त दो-तीन वर्षतक भी ब्रह्मचर्य का पालन विहित होने से गौणरुपसे पुरुषोंका विवाह आठ वा दश वर्ष में भी शास्त्रसम्मत है ।

कन्यकाऽपि न सम्भूता ह्यस्माकमतिपाप्मनाम् ।
सत्पुत्राः क्व नु जायेरन् धर्मसन्तानसंज्ञिकाः ।। ५२ ।।

अनाथ मनुष्योंको पुत्रका जन्म दुर्लभ है; बहुत पुण्यसे मनुष्यके गर्भमें पुत्र होता है। मुझ अत्यन्त पापीका एक कन्या भी नहीं हुई, धर्म-सन्तान संज्ञक सुपुत्र कहांसे हो। (५२)

वरदाच्युत ! रङ्गेश ! जगन्नाथ ! जगद्गुरो ।
सुब्रह्मण्य ! सुराधीश ! राम ! कृष्ण ! नमोऽस्तु ते ।। ५३ ।।

वेङ्कटेश ! रमाकान्त ! वराहवदनाच्युत ! ।
नारायण ! रमाधीश ! कृपां कुरु कृपानिधे ।। ५४ ।।

सुपुत्रवन्तः खलु भाग्यवन्तो ह्यपुत्रवन्तो भुवि दुःखवन्तः ।
संसारसिन्धोस्तरणेऽस्म्यशक्तः का मे गतिः
कर्मफलानुभोगिनः ।। ५५ ।।

एवमुक्त्वा महीदेवं विरराम महीपतिः ।
पापिष्ठोऽहं दुराचारः पुत्रेणाहं दरिद्रितः ।। ५६ ।।

हा कान् लोकान् गमिष्यामि क्रूरं वा नरकं गुरो ।
क उपायो महाप्राज्ञ ! पुत्रलाभे द्विजोत्तम ! ।।
इति राजवचः श्रुत्वा गुरुर्वाक्यमुवाच ह ।। ५७ ।।

हे वरद ! हे अच्युत ! हे रङ्गेश ! हे जगन्नाथ ! हे जगद्गुरु ! हे सुब्रह्मण्य ! हे सुराधीश ! हे राम ! हे कृष्ण ! आपको नमस्कार है। हे वेङ्कटेश ! हे रमाकान्त ! हे वराहमुख ! हे अच्युत ! हे नारायण ! हे रमाधीश ! हे दयानिधि ! कृपा कीजिये ! जो सुन्दर पुत्रवाले है, वे ही भगवान् है, तथा जो अपुत्रवान् है वे ही संसार में दुःखी हैं। मैं संसार-समुद्र के पार होने में असमर्थ हूँ। मुझ कर्मकी गतिको भोगनेवालेकी क्या गति होगी ? ऐसा गुरुजी से कहकर वह राजा ठहर गये, फिर बोलने लगे कि मैं पापी हूँ,

दुराचारी हूँ, पुत्रका दरिद्री हूँ! हे गुरु! मैं किस लोक वा नरक में जाऊँगा? हे महाप्राज्ञ द्विजोत्तम! पुत्रलाभ करने के लिये क्या उपाय है? इस प्रकार के राजा के वचन सुन गुरुजी बोले। (५७)

## धरणीतलात् पद्मावत्युत्पत्तिवर्णनम्

**गुरुरुवाच—**

यज्ञं कुरु नृपश्रेष्ठ! पुत्रस्तेन भविष्यति ॥

गुरु जी बोले—हे नृपश्रेष्ठ! यज्ञ कीजिये, उससे पुत्र होगा।

गुरोर्वाक्यं समाकर्ण्य यज्ञायाशोधयद्धराम् ॥ ५८ ॥

स्वर्णलाङ्गलसङ्घैश्च द्विजैर्मन्त्रिगणैस्तथा।
शोध्यमाने धरापृष्ठे तत्र पद्मं ददर्श सः।
सहस्रपत्रं राजेन्द्रः किमेतदिति विस्मितः ॥ ५९ ॥

कन्यां च पत्रेषु रमाकृतिं शुभां दृष्ट्वाऽतिसन्तुष्टमना बभाषे।
देवेन दत्ता त्वियमिन्दिराभा कन्याकुमारी कमलाभनेत्री ॥ ६० ॥

## धरणीतलसे पद्मावती की उत्पत्तिका वर्णन

राजा गुरुके वचन सुनकर यज्ञ के लिये भूमिको सुवर्णके लंगलों (हलों) से, ब्राह्मण और मंत्रीगणोंके साथ शोधन करने लगे, और शोधन करते समय पृथ्वीतलपर एक हजार दलवाले कमलको देख, यह क्या है इस प्रकार आश्चर्य के साथ उन दलों में लक्ष्मी के आकारवाली एक सुन्दर कन्याको देखकर प्रसन्न मनसे वह राजा बोले, यह लक्ष्मीके समान प्रकाशवाली, कमलनयनी कुमारी कन्या मुझे देवताके द्वारा दी गयी है। (६०)

इत्थं समाभाष्य नृपोत्तमोऽसौ हस्ते प्रगृह्याऽशु बभाण दीनः।
माया महेशस्य दुरत्यया हरेः केयं तु या सम्प्रति
गृह्यते मया ॥ ६१ ॥

इत्येवं संशयानं तमाकाशाख्यं नराधिपम् ।
उवाचाऽऽकाशगा वाणी पुत्रीयं तव वल्लभा ॥ ६२ ॥

संरक्षैनां महाभाग ! बहुकीर्तिफलप्रदाम् ।

इस प्रकार बोलकर वह श्रेष्ठ राजा उसको हाथ से पकड़कर बोले—क्या यह हरि या शिवकी दुर्धर माया है, जिसको मैं अभी ग्रहण कर रहा हूँ ? इस प्रकार सन्देह करते हुए आकाश नामक राजाको आकाशवाणी हुई—बहुत कीर्तिरूपी फल देनेवाली यह आपकी ही प्यारी पुत्री है। हे महाभाग ! इसकी रक्षा करो। (६२)

इत्यनन्तगतां वाणीं श्रुत्वा राजाऽतिहर्षितः ॥ ६३ ॥

तां कन्यां प्रतिगृह्याशु स्वभार्यां प्रत्युवाच ह ।
श्रृणु भद्रे ! महाप्राज्ञे ! देवदत्तामिमां शुभाम् ॥ ६४ ॥

संवर्धय वरां पुत्रीं गर्भजातां सुतामिव ।
इत्युक्त्वा तत्करे दत्त्वा बहुदानमथाकरोत् ॥ ६५ ॥

इस प्रकार आकाशवाणी सुनकर उस राजाने बहुत आनन्दित होकर उस कन्या को शीघ्र ही ग्रहण कर अपनी स्त्री कहा—हे भद्रे ! हे महाप्राज्ञे ! सुनो देवताओं से दी हुई इस श्रेष्ठ सुन्दरी पुत्रीका अपने गर्भ से उत्पन्न, पुत्री के समान पालन करो। ऐसा कहकर उस के हाथ में उस कन्या को समर्पण करके उस राजाने बहुत-सा दान दिया। (६५)

## वियन्नृपस्य वसुदानाख्यसुतोत्पत्तिः

कन्याऽऽगमनपुण्येन सा देवी गर्भमादधे ।
गर्भिणीं स्वसतीं दृष्ट्वा चक्रे पुंसवनं पतिः ॥ ६६ ॥

पञ्चमासे तु सञ्जाते सीमन्तं नृपपुङ्गवः ।
कारयामास विधिना ब्राह्मणैर्यजुषां गणैः ॥ ६७ ॥

## आकाश राजाको वसुदान नामक पुत्रकी उत्पत्ति

कन्याके आनेके पुण्यसे उस देवीने गर्भ धारण किया। अपनी स्त्री को गर्भिणी देखकर उस राजाने पुंसवन संस्कार किया और पांच मास हो जानेपर उस श्रेष्ठ राजाने याज्ञिके ब्राह्मणों के साथ विधिपूर्वक सीमन्त संस्कार किया। (६७)

ततः कालेव सा साध्वी नवमासे गते सती।
मासे तु दशमे प्राप्ते सुषुवे पुत्रमुत्तमम् ।। ६८ ।।

कन्याराशिगते भानौ दशम्यां रोहिणीयुजि।
पक्षे तु प्रथमे देवी सायङ्काले गुरोर्दिने ।। ६९ ।।

पुत्रोत्पत्तिप्रवक्तॄणां सर्वस्वं दत्तवांस्तदा।
गवां कोटिसहस्राणि चाश्वानामयुतं तथा ।। ७० ।।

नवधान्यानि वस्त्राणि विना स्वे छत्रचामरे।
दानं कृत्वा नृपश्रेष्ठः स्वस्तिवाचनमाचरत् ।। ७१ ।।

तब समय पाकर उस साध्वीने नव मास व्यतीत होनेपर, दशम मास प्राप्त होने पर, सूर्यके कन्याराशि में रहते समय, शुक्लपक्ष, दशमी तिथि रोहिणी-नक्षत्रयुक्त गुरुवारके सायंकालमें उत्तम पुत्र जना और पुत्र जन्मके समाचार सुनानेवालेको राजाने अपने छत्र एवं चमरको छोड़कर सर्वस्व (सब कुछ) दिया। हजार कोटि गौ, दश हजार घोड़े, नवीन धान्य तथा वस्त्र उस श्रेष्ठ राजाने दान देकर स्वस्ति वाचन कराया। (७१)

जातकर्मादिकं कर्म कृतवांस्तत्क्षणं नृपः।
दिवे च द्वादशे प्राप्ते कृत्वा पुत्राभिधां तथा ।। ७२ ।।

यन्नाम्ना वसुदातेति लोके ख्यातिं गमिष्यति।
तद्दिने बहुविप्रौघानन्नाद्यैः पर्यतोषयत् ।। ७३ ।।

राजाने उसी क्षण जात कर्म इत्यादि संस्कार किये; बारहवाँ दिन आनेपर ऐसा नाम रखा, जिससे वह वसुदाता इस प्रकार संसार में प्रसिद्ध होगा और उस दिन भी उस राजाने अन्न इत्यादि से बहुत ब्राह्मणों को सन्तुष्ट किया। (७३)

ऋषय ऊचु :

श्रुतं पुत्रस्य चरितं न श्रुतं व्यासवल्लभः।
अयोनिजायास्तत्पुत्र्याः किं नाम च तदाऽकरोत् ।। ७४ ।।

ऋषि बोले—हे व्यासप्रिय! हमने पुत्रका चरित्र सुना, उस आयोनिजा पुत्रीका उसने क्या नाम रक्खा सो नहीं सुना। (७४)

पद्मोदरीं पद्मगर्भां पद्मजातां वराननाम्।
पद्माया अवतारां तां मत्वा तस्यास्तदाऽकरोत् ।। ७५ ।।

अनुरुपं नामकर्म नाम्ना पद्मावतीति च।

श्रीसूत जी बोले—कमलके ऐसे उदरवाली, कमलके गर्भसे उत्पन्न, श्रेष्ठ मुखवाली उस पुत्री को लक्ष्मीका अवतार जानकर उसके अनुरुप "पद्मावती" नामसे उसका नामकरण उस राजाने किया। (७५)

वर्धमानौ सुतौ दृष्ट्वा राजा सन्तोषमागतः ।। ७६ ।।

अकलङ्केन्दुसदृशौ रमाचन्द्रमसाविव ।।
किं तेन सुकृतं राज्ञा बहुजन्मसु सञ्चितम् ।। ७७ ।।

अग्रजां पुत्रिकां दृष्ट्वा तदन्ते पुत्रमुत्तमम्।
दृष्ट्वा तुतोष मनसा सम्पूर्णानन्दविभ्रमः ।। ७८ ।।

निष्कलकं चन्द्रमाके जैसा या लक्ष्मी और चन्द्रके समान बढ़ते हुए सन्तानको देखकर राजा सन्तुष्ट हो गये। उस राजाने किस पुण्यका बहुत जन्म से सञ्चय किया था कि वह पहले उत्पन्न पुत्री को देख फिर उत्तम पुत्र को भी देख पूर्ण आनंद से विभ्रान्त होकर प्रसन्नचित्त हुए। (७८)

इत्थं काले गते तस्मिन्सा बाला यौवनं गता ।
यौवनाढ्यां विशालाक्षीं दृष्ट्वा राजाप्यचिन्तयत् ।। ७९ ।।

विचारयन्स नृपतिः पुत्र्यर्थं वरमुत्तमम् ।
न प्राप दुःखसंतप्तः कस्मै देया मया सुता ।। ८० ।।

इति चिन्ताब्धिमग्नोऽसौ पुत्रीपरिणये तदा ।
असंमतोऽकरोत्पुत्रं परं संस्कारसंस्कृतम् ।। ८१ ।।

श्रुत्वा राजसुता बाला ब्राह्मणैरनुज परम् ।
तदोपनीतं सद्योऽभूत्पुत्री यौवनपीडिता ।। ८२ ।।

इस प्रकार उस समयके व्यतीत होने पर वह कन्या युवती हुई । उस बड़े नेत्रवालीको युवावस्थामें देखकर राजा चिन्ता करने लगे । यह पुत्री मैं किसको दूं, ऐसा सोचते हुए, उस दुःखसे सन्तप्त राजाने पुत्रीके लिये उत्तम वर नहीं पाया । मेरी पुत्री किसको दी जाय इस चिन्ता—समुद्रमें मग्न उस राजाने अपनी इच्छा न होने पर भी पुत्रका उपनयन संस्कार किया । वह राजपुत्री ब्राह्मणों से अपने छोटे भाई का उपनयन सुन उसी क्षण जवानी से पीड़ित हुई । (८२)

सा कदाचिद्वनं बाला सखीभिः परिवारिता ।
जगाम पुष्पाण्याहर्तुं कन्या कमललोचना ।। ८३ ।।

वसन्तमागतं वीक्ष्य वने ताभिर्भयाकुला ।
पुष्पाण्याहारयामास तरुमूलमुपाश्रिता ।। ८४ ।।

किसी समय वह कमलनयना कन्या सखियों के साथ में पुष्प लेने के लिये गयी । वृक्ष के मूल में खड़े होकर भीरु कन्याने वन में वसन्तको आया हुआ देखकर सखियों से फूलोंको तोड़वाया । (८४)

तदागतो नारदस्तु वृद्धो भूत्वा जटाधरः ।
धूलीधूसरिताङ्गश्च कर्पूरसदृशद्युतिः ।। ८५ ।।

तत्र धूलिसे धूसर अंगवाले, कर्पूर के समान कान्तिवाले, जटा धारण किये हुए, वृद्ध नारदजी वहाँ पर आ गये। (८५)

आगतं तं मुनिं दृष्ट्वा विस्मयाकुलमानसा।
पद्मावती सखीः प्राह चटुला भृशकातरा ।। ८६ ।।

कोऽसौ भयङ्करो बालाः क्व यात्यत्र विचार्यताम्।

आये हुए मुनिको देखकर अत्यन्त कातर हो, बोलने में चतुर वह पद्मावती आश्चर्यित मन से अपनी सखियों से बोली—बालाओं! यह भयावन पुरुष कौन है और कहाँ जाता है? इसका विचार करो। (८६)

इत्युक्तास्तास्तदा कन्याः पप्रच्छुः स्थविरं द्विजम् ।। ८७ ।।

कोऽसि विप्र महाप्राज्ञ किमर्थं त्वमिहागतः ।।
वाक्यं तासां समाकर्ण्य गुरुः प्रोवाच सद्वचः ।। ८८ ।।

उसके लिये इस प्रकार कहे जाने पर उन कन्याओं ने उस वृद्ध ब्राह्मण से पूछा—हे विप्र! आप कौन है! और यहाँ किसलिये आये है? उनके इस बातको सुनकर गुरुजी शुभ बात बोले। (८८)

नारद उवाच—

अहं कुलगुरुः साक्षाद्युष्माकं वरयोषिताम्।
हस्ते दर्शय मे पुत्रि लक्षणानि वदामि ते।
उवाच लज्जया देवी किं वदिष्यसि हे द्विज ।। ८९ ।।

नारद जी बोले—तुम सब श्रेष्ठ स्त्रियोंका मैं कुलगुरु हूँ। हे पुत्री! अपने हाथ दिखलाओ। मैं तुम्हारे लक्षणों को बतला दूंगा। पश्चात् उस देवी ने लज्जा से कहा—हे ब्राह्मण! तुम क्या बतलाओगे। (८९)

**नारद उवाच—**

विद्धि त्वं पितृतुल्यं मां मनसा निर्मलेन च ।
इत्युक्ता मुनिना तेन दत्त्वा हस्तं वराङ्गना ।
प्राह भावि शुभं श्रोतुं निजलक्षणलक्षितम् ।। ९० ।।

नारदजी बोले—तुम निर्मल मन से मुझको अपने पिता के तुल्य समझो । इस प्रकार मुनि से कहे जाने पर उस श्रेष्ठ स्त्रीने अपना हाथ दिया और अपने लक्षणों से सूचित भावी को सुनने के लिये बोली । (९०)

**पद्मावत्युवाच—**

सत्यं वद महाप्राज्ञ लक्षणानि विलोक्य मे ।
ततो दृष्ट्वा पाणितलं प्राह स्माजतनूभवः ९१ ।।

पद्मावती बोली—हे महाप्राज्ञ ! मेरे लक्षणों को देखकर सत्य-सत्य कहिये । तब उसकी हथेली देखकर श्रीनारदजी ने कहा । (९१)

## नारदोक्तपद्मावतीशरीरसल्लक्षणानि

**नारद उवाच—**

पतिर्भवति धर्मज्ञो त्रिलोकेशो रमापतिः ।
पाणी पद्मदलोपेतौ पादौ ते स्वस्तिकायतौ ।। ९२ ।।

मुखं चन्द्रसमाकारं चक्षुः कमलकुड्मलम् ।
तिलपुष्पसमाकारा नासिका ते विराजते ।। ९३ ।।

कपोलौ मुकुराभौ ते भ्रुवौ ते धनुषा समे ।
दन्ता दाडिमबीजाभाः आस्यं कर्पूरभाजनम् ।। ९४ ।।

अधरं रक्तपद्माभं जिह्वा मृदुतरा शुभा ।
अरालालकसम्बद्धा श्यामला भाति वेणिका ।। ९५ ।।

ललाटं रत्नपीठाभं श्रोत्रे शष्कुलिकासमे ।
तनुस्ते मन्मथाकारप्रतिमाऽप्रतिमप्रभा ।। ९६ ।।

कण्ठः सूर्यांशुसदृशस्ताम्बूलरसदर्शकः ।
स्तनौ पीनौ घनौ कुब्जौ शुभौ ते मग्नचूचुकौ ।। ९७ ।।

उदरं कदलीपर्णसदृशं निम्ननाभिकम् ।
कटिस्तव करिध्वंसिकटिसाम्ययुता शुभा ।। ९८ ।।

रम्भास्तम्भसमाकारं तवोरुयुगुलं रमे ।
पृष्ठं ते वेदिवद्भाति किं त्वया सुकृतं कृतम् ।। ९९ ।।

गमनं करिराजस्य सदृशं ते वरानने ।

नारदजी बोले—हे धर्मज्ञे ! हे रमे ! तीनों लोकोंके मालिक रमापति तुम्हारे पति होंगे, क्योंकि तुम्हारे हाथ कमलके दलसे युक्त, चरण स्वस्तिकसहित और आयत, मुख चन्द्रमाके समान आकारवाला, नेत्र कमलकी कलीके समान, नासिका तिलके फूलके समान शोभायमान, कपोल दर्पणके समान चमकीले, भौंहे धनुष के समान, दन्त दाड़िमके बीज के समान प्रकाशवाले, मुख कर्पूरके पानके समान सुगन्धित, ओष्ठ लाल कमलके समान रंगवाले, जिह्वा मुलायम और सुन्दर, चोटी कुटिल केशोंसे बन्धी हुई एवं श्याम, ललाट रत्नके पीठके समान चमकीला, कर्ण शष्कुली (पूड़ी) के समान, शरीर कामदेवके आकारके समान, कण्ठ सूर्यकी किरणोंके समान तथा ताम्बूलके रसको दिखानेवाले, स्तन कठिन, पीन, उन्नत तथा दबे हुए चूचुकवाले, उदर केलाके पत्रके समान तथा नीची नाभिवाला, कटि हाथीको नाश करनेवाले सिंहकी कटिके समान, ऊरु केलेके स्तम्भके आकारवाले तथा पृष्ठ वेदीके समान सुन्दर है। तुमने कौन-सा पुण्य किया था? हे वरानने! तुम्हारी चाल श्रेष्ठ हाथीके समान है। (९९)

इति संभाष्य तां देवीं देवर्षिः पद्मसम्भवाम् ।। १०० ।।

अन्तर्दधे नारदस्तु सर्वासां पुरतो मुनिः ।
संस्तुत्य कमलां देवीं मनसा चिन्तयन् रमाम् ।।
मनसा वन्दनं कृत्वा जगामाथ ऋषिस्तदा ।। १०१ ।।

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये मृगयाविहारोद्युक्त
श्रीनिवासालंकारादिवर्णनपूर्वकमाकाशनृपतेः
कन्यापुत्रप्राप्तिवर्णनं नाम षष्ठोऽध्यायः

कमल से उत्पन्न उस देवी से इस प्रकार बात कर नारद ऋषि सब किसी के समाने कमलादेवीकी स्तुति कर, मनमें रमाको स्मरण करते हुए, मनहीमें उनको नमस्कार कर अन्तर्धान हो गये। (१०१)

## सप्तमोऽध्यायः

कुसुम चयन वेला, मिलन, पद्मावती भगवान ।
पद्मावती संवाद, प्रभु, गिरि आगमन विधान ॥ १ ॥

## पद्मावत्याः पुष्पापचयसमये श्रीनिवासदर्शनम्

**श्रीसूत उवाच—**

कन्याया जननं प्रोक्तं कुमारस्यापि वै ततः ।
तस्या वदामि चारित्रं वैवाहं पुण्यवर्धनम् ॥ १ ॥

करीन्द्रसङ्गेन समागतो हरि-
स्तुरङ्गमास्थाय वराङ्गनानाम् ।
श्रीगन्धलेपारुणचारुवक्षाः
बालार्कभाः सोऽथ समीपमाययौ ॥ २ ॥

गर्जन्तं गजराजं तं दृष्ट्वा पद्मावतीमुखाः ।
वनस्पतिमुपाश्रित्य तत्र लीनास्तदाऽभवन् ॥ ३ ॥

निमील्य नेत्रवर्त्मानि व्यूहं कृत्वा वराङ्गनाः ।
पश्यन्त्योऽथ तरुच्छन्नाः पुनः पुनरवस्थिताः ॥ ४ ॥

## फूल तोड़नेके समय पद्मावतीको श्रीनिवासके दर्शन

श्रीसूतजी बोले—कन्याका जन्म और तत्पश्चात् कुमारका जन्म भी मैंने कहा। अब उसके पुण्यको बढ़ानेवाले विवाहचरित्रको सुनो। घोड़े पर चढ़कर हाथीके साथ आये हुए, श्रीगन्धके लेपसे अरुण हृदयवाले, बालरविके समान प्रकाशवाले श्रीहरि उन श्रेष्ठ स्त्रियोंके समीप आ गये। उस हाथीको गरजते हुए देखकर पद्मावती आदि स्त्रियां वनस्पतिका आश्रय लेकर वहां पर छिप गयीं। वृक्षोंमें छिपी हुई वे श्रेष्ठ स्त्रियां व्यूह बना, दृष्टिपथको बन्द कर बारम्बार देखने लगीं। (४)

तदन्तरेऽबलाः सर्वाः ददृशुर्हयमुत्तमम् ।
बालार्कसदृशाकारं स्वर्णाभरणभूषितम् ॥ ५ ॥

पुरुषेण समायुक्तं मन्मथाकारतेजसा ।
तं दृष्ट्वा गजराजोऽपि हयस्थं पुरुषोत्तमम् ॥ ६ ॥

नमस्कृत्य यथान्यायं जगाम विपिनं नदन् ।
तं दृष्ट्वा योषितः सर्वाः विस्मयाकुलमानसाः ॥ ७ ॥

करसम्पुटमापन्नाञ्जलितास्तु भयातुराः ।
वृक्षमूलं गता बालाः अन्योन्यं वाक्यमब्रुवन् ॥ ८ ॥

इसी बीच उन सब स्त्रियों ने कामदेवके समान तेजवाले पुरुषसे संयुक्त, बालरविके समान आकृतिवाले, स्वर्णभूषणसे भूषित एक उत्तम घोड़ेको देखा। वह हाथी भी घोड़े पर बैठे हुए उस उत्तम पुरुषको देखकर विधिपूर्वक नमस्कार कर शब्द करता हुआ जंङ्गल में चला गया। वे सब स्त्रियां आश्चर्यान्वित होकर उसको देख भयभीत होकर हाथ जोड़े हुए वहां से चलीं। वृक्षके मूलके पास जाकर उन स्त्रियों ने एक दूसरसे कहा। (८)

कोऽयमत्र वरारोहे ! सखि ! कञ्जायतेक्षणे ।
कोऽसौ किरातरूपी च किं न दृष्टस्त्वया पुरः ॥ ९ ॥

तुरङ्गोपरि संस्थाय य आगच्छति हे सखि ! ।
एवं वदन्त्यस्तास्तस्थुः सा च पद्मावती शुभा ॥ १० ॥

उवाच मन्दं वचनं सखीस्तास्तु ततो द्विजाः ।
पृच्छन्तु तस्य वृत्तान्तं पितृमातृस्वबान्धवान् ॥ ११ ॥

देशं वृत्तं कुलं शीलं नामगोत्रादिकं तथा ।

इति सख्या समाज्ञप्तास्ता ऊचुर्वचनं स्त्रियः ।
आगतं पुरुषं दृष्ट्वा कोऽसि कोऽसीति चाब्रुवन् ।। १२ ।।

हे वरारोहे ! हे कमलनयनी सखी ! यहां पर यह कौन है ? यह किरात-रूपधारी जो घोड़ेपर चढ़कर आ रहा है ! हे सखी ! क्या यह तुमसे पहले देखा गया है ? इस प्रकार कहती हुई वे ठहर गयीं । तब वह सुन्दर पद्मावती उन सखियों से धीरे बोली कि उसका वृत्तान्त, पिता, माता, बान्धवों एवं देशका नाम, उसकी अवस्था, कुल, शील एवं गोत्र इत्यादिको पूछना चाहिये । इस प्रकार सखी से आज्ञा पाकर वे स्त्रियां आये हुए पुरुषको देख "तु कौन है ! तू कौन है" इस प्रकार पूछती हुई बोलीं । (१२)

कन्या ऊचुः—

किमर्थमागतोऽसि त्वं किं ते कार्यं वद प्रभो ! ।
न सन्ति पुरुषा ह्यत्र गच्छ गच्छेति चाब्रुवन् ।
तासां तद्वचनं श्रुत्वा हयस्थो वाचमूचिवान् ।। १३ ।।

कन्याएं बोली—हे प्रभु ! आप किसलिये यहाँ आये है ? आपको क्या काम है ? यहां पर पुरुषगण नहीं है ; अतः आप चले जाइये । उनके इस प्रकारके वचनको सुनकर घोड़ेपर चढ़े हुए उस पुरुषने कहा । (१३)

श्रीभगवानुवाच—

अस्ति कार्यं वरारोहाः राजपुत्र्याः समीपके ।। १४ ।।

श्रीभगवान् बोले—हे वरारोहा ! राजपुत्रीके समीप कार्यं है । (१४)

स्त्रिय ऊचु :—

किं कार्यं वद शीघ्रं त्वं यत्ते मनसि वर्त्तते ।
क्व ते वासश्च किं नाम का ते माता च कः पिता ।। १५ ।।

को भ्राता का च भगिनी किं कुलं गोत्रमेव च ।

स्त्रियाँ बोलीं—तुम्हारे मनमें जो हो; सो बोलो। तुम्हें क्या काम है? तुम कहां रहते हो? तुम्हारा क्या नाम है? तुम्हारे कौन माता और कौन पिता हैं, तुम्हारा कौन भाई, कौन बहन, कौन-सा कुल एवं कौन-सा गोत्र है। (१५)

इति तासां वचः श्रुत्वा न्यगदज्जगदीश्वरः ।। १६ ।।

उनके इस प्रकारके वचनको सुनकर जगदीश्वर बोले। (१६)

## पद्मावतीश्रीनिवासयोः परस्परसंवादः

**श्रीनिवास उवाच—**

कन्यापेक्षा मुख्यकार्यं तदन्ते प्रवदामि वः ।
इति ताः प्रोच्य चोवाच देवीं पद्मावतीमथ ।। १७ ।।

सिन्धुपुत्रकुलं प्राहुरस्माकं तु पुराविदः ।
जनको वसुदेवस्तु देवकी जननी मम ।। १८ ।।

अग्रजः श्वेतकेशस्तु सुभद्रा भगिनी मम ।
पार्थोऽपि मे सखा देवि ! पाण्डवा मम बान्धवाः ।। १९ ।।

षण्णां तु मृतपुत्राणां कृतनाम्ना महात्मनाम् ।
वियोगतप्तौ पितरौ सप्तमं राम इत्यथ ।। २० ।।

चक्रतुः संस्कृतं नाम्ना पितृलिङ्गमुपागतम् ।
जातोऽहमष्टमोऽष्टम्यां सुभद्रा मदनन्तरम् ।। २१ ।।

मातृवर्णश्च मे देवि कृष्णपक्षे जनिर्मम ।
तस्मात्कृष्णेति मां देवि ! चक्रतुर्नाम संस्कृतम् ।। २२ ।।

वर्णतो नामतश्चापि कृष्णं प्राहुर्मनीषिणः ।

वृत्तान्तो ह्यखिलो मत्तो ज्ञेयः पण्डितनन्दिनि ! ॥ २३ ॥

युष्माभिरुच्यतां वार्ता गोत्रनामकुलादिकम् ।
इति तेन समाज्ञप्तो प्रोवाच नृपनन्दिनी ॥ २४ ॥

## पद्मावती और श्रीनिवास में परस्पर सम्वाद

श्रीनिवास बोले —कन्याकी इच्छा, यही मेरा मुख्य कार्य है, उसके पश्चात् मैं तुम लोगों से बोलता हूँ। उन लोगों से इस प्रकार बोलकर पद्मावती देवीसे बोलने लगे कि पुराण जाननेवाला मेरा कुल सिन्धुपुत्र (चन्दवंश) हैं, मेरे पिता वसुदेव, मेरी माता देवकी, मेरे बड़े भाई श्वेतकेश (बलभद्र), मेरी भगिनी सुभद्रा, मेरे मित्र पार्थ (अर्जुन) और हे देवि ! मेरे बान्धववर्ग पाण्डव है। नामकरण किये हुए एवं मेरे हुए छः महात्मा पुत्रोंके वियोगसे दुःखी मेरे माता-पिताने, पिताके शरीरको प्राप्त हुए सप्तम पुत्रका "राम" नामसे नामकरण संस्कार किया। मैं अष्टमीमें आठवां पुत्र हुआ तथा मेरे पीछे सुभद्रा हुई। हे देवि ! मेरा वर्ण माताके जैसा है। कृष्णपक्ष में मेरा जन्म है। इसलिये हे देवि ! कृष्ण ऐसा संस्कृत नाम मेरा रखा गया। विद्वान लोग वर्णसे और नामसे भी मुझे कृष्ण ही कहते है। हे पण्डितकी पुत्री ! मुझे द्वारा मेरा सब वृत्तान्त बतला दिया गया, आप भी अपने गोत्र, नाम, कुल इत्यादि की वार्ता कहिये। उनसे इस प्रकार कहे जानेपर वह राजाकी कन्या बोली। (२४)

पद्मावत्युवाच—

आकाशराजतनयां निषादाधिप विद्धि माम् ।
नाम्ना पद्मावतीं कृष्ण कुलं शीतकरस्य च ।
अत्रिगोत्रं किरातेन्द्र शीघ्रं गच्छेति चाब्रवीत् ॥ २५ ॥

पद्मावती बोली—हे कृष्ण ! हे निषादोंके स्वामी ! मुझको आकाशराजकी पुत्री, पद्मावती नामकी चन्द्रवंश एवं अत्रि गोत्रवाली जानो। हे किरातेन्द्र! आप शीघ्र चले जाईये। (२५)

श्रीनिवास उवाच—

किमर्थं निष्ठुरं वाक्यं मन्दं किं न प्रभाषसे ।
अन्नं कांक्षन्ति वै लोकाः यो ददाति नरोत्तमः ।। २६ ।।

स पुमान्पुण्यमाप्नोति जलदोऽपि फलं लभेत् ।
अदिशन्मृदुभाषी च न तु निष्ठुरभाषणः ।। २७ ।।

अथाहं काममुद्दिश्य पात्रभूतोऽस्मि साम्प्रतम् ।
सुखमेष्यसि दानेन त्वन्ते स्वर्गं गमिष्यसि ।। २८ ।।

आत्मानं दिश मह्यं त्वं किं वृथा निष्ठुरोक्तिभिः ।
सा तस्य वचनं श्रुत्वा क्रोधात्ताम्रविलोचना ।। २९ ।।

श्रीनिवास बोले—यह निष्ठुर वाक्य क्यों बोलती हो? धीरे क्यों नहीं बोलती? मनुष्यगण अन्न चाहते है, जो मनुष्य श्रेष्ठ अन्न देनेवाला है वही पुरुष स्वर्गको प्राप्त करता है। जल देनेवाला अथवा नहीं देनेवाला भी मृदुभाषी होनेसे फल पाता है, निष्ठुर बोलनेवाला नहीं पाता। मैं इस समय कामके उद्देश्यसे आया हुआ पात्र हूँ; उसको देनेसे सुख पाओगी और अन्तमें स्वर्गको भी जाओगी। अतएव तुम मुझको अपनी देह समर्पण कर दो, इस निष्ठुर वचनसे क्या? पश्चात् वह उनके वचनको सुनकर क्रोधसे, रहवेत्रवाली होकर बोली। (२९)

पद्मावत्युवाच—

अवाच्यं वदसे मूढ ! जीवनेच्छा न विद्यते।
आकाशराजस्त्वां दृष्ट्वा हनिष्यति न संशयः ।
यावन्नायाति तावत्त्वं गच्छ शीघ्रं स्वमालयम् ।। ३० ।।

पद्मावती बोली—रे मूढ! तू अवाच्य वचन बोलता है, क्या तेरी जीनेकी इच्छा नहीं है? आकाशराज तुमको देखकर मार डालेंगे इसमें सन्देह नहीं। जबतक वे नहीं आते हैं उसके पहले ही अपने घर चले जाओ। (३०)

श्रीनिवास उवाच—

कार्यान्ते मरणं सौख्यं कार्यहानौ मृतिः कुतः ।
कथं हन्यात्स राजेन्द्रस्त्वधर्माभिमुखो हि माम् ? ।
त्वं कन्याऽहं वरो देवि ! कोत्रान्यायो महीपतेः ।। ३१ ।।

श्रीनिवास बोले—कार्य की सफलता में मरना भी सुख है, कार्य की हानि में मरना कहा ? अधर्मका अभिमुख होकर वह राजा मुझको क्यों मारेगा ? हे देवि ! तू कन्या और मैं वर हूँ, इसमें राजा की दृष्टि से अन्याय क्या है । (३१)

पद्मावत्युवाच—

श्रुणु मूढ़ न जानासि बालभावेन किं वृथा ।
त्वां दृष्ट्वाकाशराजोऽपि कृत्वा ते गलबन्धनम् ।।
बध्नीयान्निगडैर्मूर्खं भविष्यत्प्रवदाम्यहम् ।। ३२ ।।

पद्मावती बोली—रे मूढ़ ! सुनो, तुम नहीं जानते हो, व्यर्थ की बकवाद से क्या लाभ ? तुमको देखकर ही आकाशराज गले में रस्सी बान्धकर, बेड़ियों से जकड़वा देंगे, यह मैं तुम्हारा भविष्य कह रही हूँ । (३२)

श्रीनिवास उवाच—

निश्चित्य मरणं देवि रन्तुकामोऽस्म्यहं त्वया ।
जातस्य मरणं नित्यं पूर्वकर्मफलानुगम् ।
आकाशराजो धर्मात्मा कथं हन्यादनागसम् ।। ३३ ।।

श्रीनिवास बोले—हे देवि ! मैं मरना निश्चय कर तुम्हारे साथ रमण करने की इच्छा करता हूँ । जो उत्पन्न हुआ है उसका पूर्वकर्म के फलके अनुसार मरन अवश्यम्भावी है । धर्मात्मा आकाशराज निरपराधको क्यों मारेंगे । (३३)

पद्मावत्युवाच—

गौरवं यन्निषादेन्द्र नृपस्यास्य हरेर्यथा ।
वरदस्याथ रङ्गस्य वेङ्कटाचलवासिनः ।। ३४ ।।

तद्रक्ष त्वं महाबाहो सुखं गच्छ स्वमालयम् ।
इत्युक्तोऽपि तया देव्या निषादेन्द्राकृतिर्हरिः ।। ३५ ।।

निराकृत्य च तद्वाक्यं हयस्थः पुनरापतत् ।
हयमग्रगतं वीक्ष्य सा बाला वाक्यमब्रवीत् ।। ३६ ।।

पद्मावती बोली—हे निषादेन्द्र ! इस राजा का श्रीवरदराज श्रीरङ्गनाथ और श्रीवेङ्कटाचलवासी भगवान् के समान गौरव है। अतएव तू अपनी रक्षा करो तथा सुख से अपने घर जाओ। इस देवीसे इस प्रकार कहे जानेपर वह निषाद के आकारवाले भगवान् उसके वाक्यका अनादर कर घोड़े पर चढ़े हुए फिर भी आगे बढ़े और घोड़ेको आगे आया हुआ देखकर वह स्त्रीबोली। (३४-३६)

पद्मावत्युवाच—

त्यक्त्वा च पितरौ बन्धून्भ्रातृमुख्यान्वनें चरन् ।
अनाथो म्रियसे व्यर्थं किमर्थं काकभोजनम् ।।
इति तस्या वचः श्रुत्वा तामूचे वारिजेक्षणः ।। ३७ ।।

पद्मावती बोली—माता, पिता, भाई, बन्धु इत्यादि मुख्य गणोंको छोड़कर जङ्गलमें घूमते हुए अनाथ होकर व्यर्थ मरते हो, काकभोजन किसलिए है ? इस प्रकार उसके वचनको सुनकर कमलनयन भगवान् उससे बोले। (३७)

श्रीनिवास उवाच—

विधिना लिखितं यत्तु न तद् व्यर्थं भविष्यति ।
जयो वाऽपजयो वा स्यात्त्वयि भोगं करोम्यहम् ।। ३८ ।।

श्रीनिवास बोले—ब्रह्मा से जो लिखा गया है, वह व्यर्थ नहीं होगा। जय हो अथवा पराजय, तुमसे भोग अवश्य करूँगा। (३८)

इत्युक्ता कोपताम्राक्षी सखीभिः परिवारिता ।
तर्जयन्ती जगद्योनिं शिलापाणिः समागमत् ।। ३९ ।।

ताडयामास गोविन्दं शिलौघैः शीघ्रगत्वरैः ।
ताड्यमानः शिलावर्षैर्न्यपतद्घोटराट् स्वयम् ॥ ४० ॥

इस प्रकार कहे जाने पर क्रोधसे लाल नेत्रवाली हो, हाथ में पत्थर लिए हुए, पद्मावती अपनी सखियों से रोके जानेपर भी जगत्कारण हरिको ललकारते हुए पासमें आयी और उन पत्थरोंसे शीघ्र ही गोविन्दको मारने लगी । पत्थरकी वर्षा से पिटा हुआ वह घोड़ा स्वयं गिरा पडा । (३९-४०)

त्यक्तासुं स हयं दृष्ट्वा मुक्तकेशो मुहुर्मुहुः ।
पश्यन्पश्यन्दिशः सर्वा अभ्रमद्विभ्रमन्निव ॥ ४१ ॥

हयो वै सङ्कटं प्राप्तो ममात्र कृतसन्निधेः ।
इत्युच्चरन् रमाकान्तो जगामोत्तरदिङ्मुखः ॥ ४२ ॥

आरूढ सोपानगणो गिरेर्विभु-
र्विडम्बयंल्लोकमवाप शय्याम् ।
प्राप्याधिमानन्दयुतोऽपि माधवो
यथा युगान्ते वटपत्रशायी ॥ ४३ ॥

भगवान् उस घोड़े को मरे देखकर, केशोंको खोले हुए सब दिशाओंको देख-देखकर पागलके समान घूमने लगे और मेरे घोड़ेको यहाँ पर संकट प्राप्त हुआ है ऐसा बोलते हुए लक्ष्मीपति उत्तर दिशा में गये तथा उस पर्वत के सोपानपर चढ़कर संसारको माहते हुए शय्यापर पड़ गये, जिस प्रकार आनन्द से युक्त माधव युग के अन्तमें वटके पत्रपर सोये थे । (४३)

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये पद्मावती श्रीनिवासयोः परस्परं संवादादिवर्णनं नाम सप्तमोऽध्यायः

## अष्टमोऽध्यायः

पद्मावती तल्लीन प्रभु, वकुला वचन सुशन्त ।
वकुलासे भगवानका, कथन दुःख दुर्दान्त ।। १ ।।

पद्मावती अभिमत कथन, पूर्व जन्म अनुलेख ।
वकुलाका तेहि पुर गमन, कहि सब ससि तेहि देख ।। २ ।।

सखिसे बकुलाका कथन, प्रभू गमन धरि भेष ।
प्रभु जननीं संवाद बहु, अन्त हुए विनिवेश ।। ३ ।।

## पद्मावतीपराजितश्रीनिवासं प्रति बकुलमालिकासान्त्वबचनम्

सूत उवाच :—

शयनं प्राप पर्यङ्के श्रीनिवासो वृषाकपिः ।
तदा गता च सा देवी सेवार्थं बकुला शुभा ।। १ ।।

षड्विधान्नं समादाय सूपापूपरसान्वितम् ।
रमापतेस्तु बहुलभक्तिभावेन संयुता ।। २ ।।

शयानं श्रीनिवासं च वल्मीकस्थानसंस्थितम् ।
श्वसन्तं दीर्घनिश्वासं रुदन्तं नेत्रबिन्दुभिः ।
अभाषमाणं श्रीकान्तं बभाषे बकुला शुभा ।। ३ ।।

श्रीसूतजी बोले—जब वृषाकपि श्रीनिवास शय्यापर पड़े तब वह सुन्दरी बकुलादेवी सूप (दाल), अपूप (पूआ) इत्यादि रसोंसे युक्त छः प्रकारके अन्नको लेकर, रमापति के ऊपर बहुत भक्ति-भावसे संयुक्त होकर सेवा के लिये गयी और वल्मीकके स्थानपर ठहरे हुए, दीर्घनिश्वास छोड़ते हुए, नेत्र बिन्दुओंसे रोते हुए, सोये हुए तथा नहीं बोलते हुए लक्ष्मीपति श्रीनिवाससे वह सुन्दरी बकुला बोली । (३)

बकुलोवाच—

उत्तिष्ठोत्तिष्ठ गोविन्द ! किं शेषे पुरुषोत्तम ! ।
न कदापि दिवाऽस्वाप्सीर्नाकार्षीः रोदनं हरे ! ।। ४ ।।

किमर्थं दुःखमेणाक्ष आर्तवद्दृश्यसे कुतः ।
मनोगतं वा किं देव ! तद्वदस्व यथार्थतः ।। ५ ।।

परमान्नं कृतं देव भोक्तुमागच्छ माधव ! ।
इत्युक्तं वचनं श्रुत्वा नोवाच वचनं हरिः ।
हरिं दृष्ट्वा हिरण्यांगी पुनर्वाचमुवाच ह ।। ६ ।।

बकुला बोली—हे गोविन्द ! हे पुरुषोत्तम ! उठो ! उठो ! क्यों सोते हो ? दिनमें कभी भी आप नहीं सोये एवं हे हरि ! रोदन भी नहीं किया है; हे मृगके समान नेत्रवाले ! तुम किसलिये आर्तके समान दिखलायी पड़ते हो ? हे देव ! आपके मनमें क्या है, सो यथार्थ कहिये । हे देव ! हे माधव ! बनाये गये इस उत्तम अन्नको भोजन करने के लिये आइये । इस प्रकार कहे हुए वचनको सुनकर हरि कुछ नहीं बोले और हरिको देखकर वह स्वर्णके रंगके समान शरीरवाली पुनः वचन बोली । (६)

किं दृष्टं विपिने कृष्ण ! किमर्थं दुःखमुल्बणम् ।
आर्तिहानोऽपि देव ! त्वमार्तवत् दृश्यसे कुतः ! ।। ७ ।।

मनोगतं वदाऽदेशं गौरवं मयि मा कृथाः ।
गौरवं बलरामे स्याद्देवकीवसुदेवयोः ।। ८ ।।

दुःखं भवति दृष्ट्वा त्वामभुक्तं भूतभावनः ।
सर्वलोकार्तिसंहर्तः ! पुण्यमूर्ते नमोऽस्तु ते ।। ९ ।।

का दृष्टा कन्यका कृष्ण गान्धर्वी वा सुरोत्तम ।
कस्याः सङ्गं समापेक्ष्य चित्तवैकल्यमद्य ते ।। १० ।।

बकुला बोली—हे कृष्ण! वनमें आपने क्या देखा? किसलिये यह भयंकर दुःख है? हे देव! जनात होनेपर भी तुम दुःखी के समान क्यों दीखते हो? अपने मनकी बात कहिये। मेरे सामने गौरव मत दिखाइये; बलराम, देवकी और वसुदेवको ही गौरव दिखलाइये। हे भूतभावन! तुमको भूखे देखकर दुःख होता है। सब लोकके दुःखको छुड़ानेवाले पुण्यकी मूर्ति आपको नमस्कार है। हे देवताओंमें श्रेष्ठ कृष्ण! आपने किसी कन्याको देखा या किसी गान्धर्वीको? किसके संगकी इच्छासे आपके चित्तमें दुःख होता है। (१०)

का च पुण्यवती बाला बालं भक्तवशं हरिम् ।
मोहयामास कामार्ता न जानामि जगद्गुरो ॥ ११ ॥

वद गोविन्द ! ते कार्यं क्षणमात्रात्करोम्यहम् ।
मृगं दृष्ट्वा भयं वाऽऽप्तं चोरं वा क्रूररूपिणम् ॥ १२ ॥

पिशाचभूतप्रेतान्वा न जानामि रमापते ।
मन्त्रं वा यन्त्रपूगान्वा मूलिका औषधान्यपि ॥ १३ ॥

कारयित्वा यथाशास्त्रं तत्सर्वं शमयाम्यहम् ।

हे जगद्गुरु! यह कौन कामार्ता एवं पुण्यवाली स्त्री है, जिसने भक्तके वशीभूत बालरूप हरिको भी मोहित कर लिया, मैं नहीं जानती। हे गोविन्द! आप कहिये; आपका कार्य मैं क्षणमात्रमें कर दूंगी। हे रमापति! मृग क्रूररूपी चोर, पिशाच, भूत वा प्रेत किसको देखकर आपको भय हुआ है, वह मैं नहीं जानती हूँ। मंत्र, पवित्र यंत्र अथवा मूल इत्यादि औषधियोंको शास्त्रकी विधिसे बनवाकर उन सबोंका शमन करूंगी। (११)

इत्युक्तेऽपि हरौ तूष्णीं स्थिते बकुलमालिका ॥ १४ ॥

आनीतं तत्र निःक्षिप्य तत्समीपमुपाश्रिता ।
पादसंवाहनं कृत्वा सान्त्वयामास चासकृत् ॥ १५ ॥

इतना कहे जानेपर भी भगवान् के चुप रहनेपर वह बकुलमालिका लाये हुए पदार्थोंको वहीं रख उनके पास बैठ एवं पकड़कर बारबार सान्त्वना देने लगी। (१५)

सान्त्वयन्त्या तयाऽऽयासस्विन्नं देहं समन्ततः।
आपादमौलिपर्यन्तं कराभ्यां परिमृज्य च ॥ १६ ॥

बोधितोऽपि रमाकान्तो नोवाच वचनं यदा।
तदा सा बकुला खेदादुवाच वचनं हरिम् ॥ १७ ॥

पृथक्कृत्वा छन्नवस्त्रं हस्तेन परिमृज्य च।

सान्त्वना देती हुई उससे, श्वेदसे भीगी हुई देहको शिरसे पैरतक हाथोंसे पोछकर जगाये जानेपर भी लक्ष्मीपति हरि जब वचन नहीं बोले तब वह बकुला ढंके हुए वस्त्रको निकालकर एवं हाथसे मार्जन कर खेदपूर्वक हरिसे वचन बोली। (१७)

देवदेव! जगन्नाथ! पुराणपुरुषोत्तम! ॥ १८ ॥

मनोगतं करिष्यामि नात्र कार्या विचारणा।
सत्यं वद मनःस्थं ते मा लज्जा मा भयं कृथाः ॥ १९ ॥

पूरयाम्यविलम्बेन यावन्मे वर्तते बलम्।
इति तद्वचनं श्रुत्वा हरिरुष्णं समुच्छ्वसन्।
उवाच चातिदुःखेन मन्दं मन्दं मनोगतम् ॥ २० ॥

हे देव-देव! हे जगन्नाथ! हे सनातन! हे पुरुषोत्तम! आपके मनमें जो है वही करूँगी, इसमें विचार नहीं करना चाहिये। मनकी बातको सत्य-सत्य कहिये, लज्जा और भय मत कीजिये। बिना विलम्बके मैं उसको पूरा करूँगी। उसकी इस बातको सुनकर श्रीहरिने गर्म सांस छोड़ते हुए बहुत दुःखसे अपने मनकी बातको धीरे-धीरे कहा। (२०)

## बकुलां प्रति श्रीनिवासोक्तस्वमनोनिर्वेदहेतुवर्णनम्

श्रीनिवास उवाच—

नामोहयन्मां गान्धर्वी नर्षिपुत्री न राक्षसी ।
न पिशाचा भूतगणाः प्रेता वा मे भयावहाः ।। २१ ।।

मृगाश्चारण्यकाश्चोरा न क्रूरा मे कदाचन ।
मन्नामस्मरणादेते विद्रवन्ति दिशो दश ।। २२ ।।

ततस्तेभ्यो भयं नेह मृत्युमृत्योर्ममानघे ।

## बकुलमालिका के प्रति श्रीनिवास का दुःखवर्णन

श्रीनिवास बोले—न मुझको गान्धर्वीने मोहित किया है, न ऋषिपुत्री और न राक्षसी ही ने, न पिशाच भूतगण वा प्रेत ही मुझको डरानेवाले हुए है। मृग और वनके चोर भी मेरे लिये कभी क्रूर नहीं है। ये सब मेरे नामके स्मरण ही से दशों दिशाओं में भाग जाते है। हे अनघे! इसलिये उनसे वा मृत्युकी मृत्युसे भी मुझको भय नहीं है। (२३)

मया दृष्टा वरा कन्या नाम्ना पद्मावती शुभा ।। २३ ।।

तां दृष्ट्वा मे मनो भ्रान्तं काममोहवशं गतम् ।
सुरूपां सुन्दरीं सुभ्रूं नीलालकविराजिताम् ।। २४ ।।

पूर्णेन्दुवदनां श्यामां नीलमाणिक्यविग्रहाम् ।
साक्षाद्रमासमां कन्यां घटयाऽशु वरानने ।। २५ ।।

बहुजन्मार्जितेनैव पुण्येनैषा हि लभ्यते ।
मत्पुण्यं पक्वतां यातं दर्शनेन सुलोचने ।। २६ ।।

मानुषं देहमासाद्य तां कन्यां कः पुमांस्त्यजेत् ?
लोके विना जडमतिमन्नपानविवर्जितम् ।। २७ ।।

जीवनेन किमेतेन कार्यहीनेन मे सखि ।
घटयाऽशु वराङ्गी तामाकाशनृपनन्दिनीम् ।। २८ ।।

तां विना न हि जीवामि सत्यमित्यवधारय ।
ताडितोऽहं शिलावर्षैर्हताश्वोऽस्मि वरानने ।। २९ ।।

मज्जीवनं वृथा मातर्जातं वै वेङ्कटाचले ।
यतोऽभूदवतारोऽत्र पद्मावत्यर्थमेव मे ।। ३० ।।

मैंने पद्मावती नामकी एक श्रेष्ठ सुन्दरी कन्या देखी है। उस सुन्दर भौंवाली, काले केशसे शोभित, सुरुप सुन्दरीको देखकर मेरा भ्रान्त मन काम और मोहके वश हो गया है। हे वरानने! पूर्ण चन्द्रमाके समान मुखवाली, श्यामा, नील और माणिक्यकी मूर्ति तथा साक्षात् लक्ष्मीके समान उस कन्यासे मुझे शीघ्र मिलाओ। बहुत जन्ममें उपार्जन किये हुए पुण्यसे यह मिलेगी। हे सुन्दर नेत्रवाली। मेरा पुण्य उसके दर्शनहीसे परिपक्व हो गया है। इस संसार में मनुष्यशरीरको पाकर, अन्नपानसे रहित कुंद-बुद्धिको छोड़कर, कौन पुरुष उस कन्याको छोड़ सकता है? हे सखि! इस मेरे व्यर्थ जीवनसे क्या? उस सुन्दर अङ्गवाली आकाशराजकी पुत्रीको शीघ्र मिलाओ। उसके बिना मैं नहीं जीऊँगा, यह सत्य मानो। हे सुन्दर मुखवाली! मैं पत्थरोंकी वर्षासे उससे मारा गया हूँ। मेरा घोड़ा भी मार डाला गया है। हे माता! श्रीवेङ्कटाचल में मेरा जीवन व्यर्थ ही हुआ, क्योंकि यहाँपर मेरा अवतार पद्मावतीके हेतु ही हुआ था। (३०)

पुत्रो मे वैरमापन्नः किं कृतं पूर्वजन्मनि ।
दृष्टिहीनेन विधिना निर्मिता कन्यका वरा ।। ३१ ।।

अनायासेन मे सा स्यादिति मे निश्चिता मतिः ।
किं दृष्टं ब्रह्मणा पूर्वं मात्पापं घोरदर्शनम् ।। ३२ ।।

यत्पापमनुसृत्यैवं घटनं नाकरोद्विधिः ।
मद्भागस्थौ विधिस्त्वं हि साहाय्यं कुरु मेऽङ्गने ।। ३३ ।।

न करोषि यदा बाले तदा मे मरणं ध्रुवम् ।
मरणे जीवनोपायं ये कुर्वन्ति नरोत्तमाः ।। ३४ ।।

ते दिवं यान्ति यानेन पुण्यमार्गेण कन्यके ।
इत्थं धर्मार्थकामात्त्वं धर्ममार्गमुपाश्रय ।। ३५ ।।

किमुक्तेन विशेषेण विदिताशाऽसि सङ्गमे ।
त्वं मे माता पिता देवि भ्राता मातुल एव च ।। ३६ ।।

त्वं प्रह्लादस्त्वमक्रूरस्त्वं ध्रुवस्त्वं गजेश्वरः ।
त्वमुद्धवोऽतिभक्तो मे त्वं किरीटी बलिस्तथा ।। ३७ ।।

अजामिलो द्रौपदी च भक्तो मे त्वं विभीषणः ।
त्वां दृष्ट्वा मे मनो हर्षं गच्छतीह निरन्तरम् ।। ३८ ।।

मद्दुःखव्यपनोदाय निर्मिता विधिनाङ्गना ।
गवां कोटिसहस्रेण हयानामयुतैस्तथा ।। ३९ ।।

सुवर्णतिलदानैश्च समं माङ्गल्यवर्धनम् ।
कन्यां दृष्ट्वा तु सन्तोषं लभते नात्र संशयः ।
इति तेन समाज्ञप्ता बकुला वाक्यमब्रवीत् ।। ४० ।।

मेरे पुत्र ब्रह्माजी भी मेरे शत्रु बने, मैंने पूर्व जन्म में क्या किया था? यह कन्या अन्धे ब्रह्माने बनायी गयी है। अनायास ही वह मेरी होगी यह मेरी निश्चल धारणा थी। विधाता ब्रह्माने मेरा कौन-सा जन्मान्तरका भयङ्कर पाप देखा कि जिस पापके कारण उसने यह संयोगकी घटना नहीं की? हे सुन्दरी! मेरे

भागकी विधाता तू ही है। इसलिये मेरी सहायता करो। हे बाला! यदि तू यह नहीं करती हो तो, मेरा मरना निश्चित है। हे कन्यके! जो उत्तम मनुष्य मृत्युके अवसर पर जीवनका उपाय करते है, वे पुण्य मार्गसे सवारीपर चढ़कर स्वर्गको जाते है। हे धर्म और अर्थके इच्छुक। तुम धर्ममार्गका इस प्रकार आश्रय लो। अधिक कहने से क्या? संगमकी मेरी आशा तो तुमसे जानी गयी है। हे देवी! तू ही मेरी माता, पिता, भ्राता, मातुल (मामा) तथा मेरा अत्यन्त भक्त प्रह्लाद, अक्रूर, ध्रुव, गजेन्द्र, उद्धव, किरीटी अर्जुन, बलि, अजामिल, द्रौपदी एवं विभीषण हो। तुमको देखकर मेरा मन निरन्तर हर्षको प्राप्त होता है। मेरे दु:ख को छुड़ाने के लिये ब्रह्मासे वह कन्या बनायी गयी है। माङ्गल्यको बढ़ानेवली कन्याको देखकर करोड़ों गो, दश सहस्र घोड़ों तथा तिलपर्वतदानके समान, सन्तोष जरूर प्राप्त होता है, इसमें सन्देह नहीं। उनसे इस प्रकार कहे जानेपर बकुला देवी यह बात बोली। (४०)

बकुलोवाच—

कुत्रास्ते जगदाधार त्वया याऽत्र निरीक्षिता।
तन्मार्गं वद गोविन्द गच्छामि करुणानिधे ॥ ४१ ॥

का सा पूर्वं किमर्थं च कन्यका जनिता भुवि।
तद्वृत्तमखिलं ब्रूहि सत्येन मम केशव ॥ ४२ ॥

बकुला बोली—हे जगदाधार! तुमसे जो यहाँ पर देखी गयी है वह कहाँपर है? हे गोविन्द! उस मार्गको कहिये। हे करुणानिधि! मैं जाऊँगी! वह कन्या पूर्वमें कौन थी? किसलिये पृथ्वीपर उत्पन्न हुई है? हे केशव! वह सब वृत्तान्त सत्य-सत्य मुझसे कहिये। (४२)

इत्याज्ञप्तो विरिञ्चेशविनताङ्घ्रिसरोरुहः।
उवाच मन्दं वचनं बकुलां धरणीधरः ॥ ४३ ॥

ब्रह्मा एवं शिवसे नमस्कृत चरणकमलवाले धरणीधर भगवान् इस प्रकार कहे जानेपर बकुलासे मन्द वचन बोले। (४३)

## बकुलां प्रति श्रीनिवासवर्णितपद्मावतीपूर्वजन्मोदन्तः

श्रीनिवास उवाच—

शृणु बाले पुरावृत्तं पद्मावत्या जनेः शुभम् ।
त्रेतायां रामरूपेण त्ववतारमहं गतः ।। ४४ ।।

पितृमातृवचः श्रुत्वा दण्डकारण्यमागतः ।
लक्ष्मणेन सह भ्रात्रा सीतया बकुले शुभे ।। ४५ ।।

तदा तु रावणो नाम राक्षसो लोककण्टकः ।
लोकभर्तुः सतीं हृत्वा लङ्कां गन्तुमवर्तत ।। ४६ ।।

लक्ष्मणोऽप्यग्रजं द्रष्टुं सीतया प्रेषितो बलात् ।
तत्कालमालक्ष्य स राक्षसेन्द्रो
विमानमारोपयितुं हि सीताम् ।
प्रावर्ततैषा च तदा रुराव
हा राम हा लक्ष्मण राघवेति ।। ४७ ।।

तदार्तरावेण तदा वनौकसो
विचुक्रुशुस्तत्र वनान्तरस्थिताः ।
तद्वाक्यमाकर्ण्य च हव्यवाहनः
पाताललोकादुदगाद्धरातलम् ।। ४८ ।।

समायान्तं दुराधर्षमाकर्षन्तं च जानकीम् ।
सम्भाव्य रावणं क्रूरं पातालादुपगम्य च ।। ४९ ।।

रावणेन च पापेन सहितः सीतया तथा ।
रावणं बोधयामास नानावाक्यगणैस्तदा ।। ५० ।।

श्रीनिवास बोले—हे बाला ! पद्मावतीके जन्मका शुभकारक वृत्तान्त सुनो । त्रेतामें राम-रूप से मैं अवतार धारण किया था । हे सुन्दरी बकुला ! पिता और

माता के वचन सुनकर भाई लक्ष्मण और सीताके साथ मैं दण्डकारण्यमें आया, तब रावण नामक लोककंटक राक्षस मुझ जगत्पतिकी सती सीताको हरण करके लङ्का जाने के लिये तैयार हुआ, लक्ष्मण भी बड़े भाईको देखनेके लिये सीताद्वारा बलपूर्वक भेज दिया गया था। वह राक्षसेन्द्र उस समयको देखकर सीताको विमान पर चढाने को तैयार हुआ था। तब वह सीता "हा राम! हा लक्ष्मण! हा राघव!" इस प्रकार रोने लगी, वनवासीगण उस आर्त रुदनको सुनकर रो उठे! उस बातको सुनकर हव्यवाहन (अग्निदेव) पाताललोकसे धरातलपर ऊपर आये। वे पातालसे ऊपर आकर सीताको खींचते हुए क्रूर रावणसे बोलकर उस सीता एवं पापी रावणसे मिले थे और नाना प्रकारके वाक्योंसे समझाया। (५०)

इयं जनकपुत्री न विप्रपत्नी तु खेचर।
राघवस्त्वद्भयाद्रक्षञ्जानकीं मम सन्निधौ ॥ ५१ ॥

संस्थाप्य विपिने रामो व्यचरत्सहलक्ष्मणः।
शिष्योऽसि परमोदार! मम कल्याण रावण! ॥ ५२ ॥

प्रियोऽसि मा गमो विप्रपत्न्यां सीताभ्रमं वृथा।
इति प्रतारयन्रक्षश्छद्मना जनकात्मजाम् ॥ ५३ ॥

इत्थं स्वलोकमादाय तां सम्पूजयितुं द्रुतम्।
स्वाहायां सन्निवेश्याथ नाम्ना वेदवतीं शुभाम् ॥ ५४ ॥

प्राग्रावणापचारेण प्रतिश्रुत्य च तद्वधम्।
कृतप्रवेशां क्रोधेन समिद्धे जातवेदसि ॥ ५५ ॥

तत आरभ्य समयमाकाङ्क्षन्तीं स्थितां सतीम्।
सीताऽऽकृतिधरां कृत्वा मायया मेषवाहनः ॥ ५६ ॥

प्रदर्शयन्नुवाचाथ रावणं प्रीणयन्निव।
इमां सीतां समादाय गच्छ शीघ्रं निशाचर! ॥ ५७ ॥

हे खेचर! यह जनकजीकी पुत्री नहीं है; किन्तु यह विप्रपत्नी है। राघव (श्रीराम) जानकीको तुम्हारे भयसे मेरे पास रखकर लक्ष्मणके साथ घूमते है। हे परम उदार रावण! तुम मेरे शिष्य हो, तुम प्रियहो, अतः व्यर्थ ही विप्रपत्नी के बारे में सीताका भ्रम मत करो। राक्षसको इस प्रकार छलसे ठगते हुए, इस प्रकार जानकीको अपने लोकमें लाकर, उसकी पूजा करने केलिये उस सुन्दरीको शीघ्र स्वाहामें स्थापितकर, पहले रावणके दुराचारसे उसके वधकी प्रतिज्ञाकर, क्रोधसे अग्निमें प्रवेश की हुई और तबसे समयकी प्रतीक्षा करती ठहरी हुई, वेदवती नाम को सतीको मायासे सीताका आकर धारण करपाकर वह मेषवाहन (अग्निदेव) रावणको दिखलाते हुए, उसको प्रसन्न करने के लिये बोले—हे निशाचर! इस सीताको लेकर तू शीघ्र जाओ। (५७)

इत्युक्तः पावकेनायं तमादायागमत् द्रुतम् ।
हरे चाग्नौ विशेषेण भक्तिर्वै रावणस्य च ।। ५८ ।।

तस्मादग्निवचः श्रुत्वा त्वेवं तां जानकीं तदा ।
अज्ञानान्मन्यमानोऽसौ रावणो मोहदर्पितः ।। ५९ ।।

लङ्कां गत्वाऽशोकवने शिंशुपावृक्षमूलतः ।
सीताकृतिं तां संस्थाप्य विष्णवाविष्टो स राक्षसः ।। ६० ।।

कृतकृत्यं तदाऽत्मानं मेने वै कालचोदितः ।

अग्निसे इस प्रकार कहे जानेपर उसको लेकर शीघ्र चला गया। भगवान् शंकर और अग्निसे रावणको विशेष भक्ति थी, इसलिये अग्निके वचनको सुनकर, उसको अज्ञानसे जानकी मानते हुए, यह मोहसे भरा हुआ रावण लङ्कामें जा विधिसे प्रेरित होकर अशोक वनमें शिशुपा वृक्षके मूलमें राम राम रटती हुई उस सीताकी आकृतिको स्थापित कर अपनेको कृतकृत्य माना। (६०)

रामो गत्वा तु तं हत्वा रावणं सगणं खलम् ।। ६१ ।।

सीतां प्राप्य जगन्नाथो युद्धान्ते पर्यचिन्तयत् ।
तां तु लोकापवादेन पावकेन विशोधिताम् ।। ६२ ।।

जिघृक्षुणा राघवेण सीता चाग्नौ प्रवेशिता ।
सीताद्वन्द्वं तत्र दृष्ट्वा प्रोवाच निजयामिनीम् ।। ६३ ।।

का सा देवी तव समा तव रूपसमन्विता ।
न जानेऽहं वराङ्गीं तां तव बिम्बनिभां शुभाम् ।
राघवेणैवमुक्ता सा जानकी वाक्यमब्रवीत् ।। ६४ ।।

रामचन्द्रजी भी वहां जा, खल रावणको उसके गणोंके साथ मारकर युद्धके अन्तमें सीताको पाकर सोचने लगे। लोकके अपवाद-भयसे, अग्निसे शुद्ध की हुई उसको ग्रहण करनेकी इच्छावाले राघवसे वह सीता अग्निमें प्रवेश करायी गयी। वहाँ सीता युगलको देखकर रामचन्द्रजी अपनी पत्नी से बोले—वह तुम्हारे जैसे रूपवाली कौन है? तुम्हारे आकारवाली उस श्रेष्ठ अंगवाली सुन्दरीको मैं नहीं जानता। रामचन्द्रजीसे इस प्रकार कहे जानेपर जानकी यह बात बोली। (६४)

जानक्युवाच—

मद्दुःखं ह्येतया भुक्तं निर्निमित्तं दयालुना ।
या सा वेदवती देव स्वाहायाः सन्निधौ स्थिता ।। ६५ ।।

तामङ्गीकुरु गोविन्द विवाहं विधिपूर्वकम् ।
इति सीतावचः श्रुत्वा रामो वचनमब्रवीत् ।। ६६ ।।

जानकी बोली—हे देव! इस दयालुने मेरे लिये विना कारणही के दुःख भोगा है, यह वही वेदवती है जो स्वाहा के पास थी; हे गोविन्द! उसका विधिपूर्वक विवाह कर उसे ग्रहण कीजिये। सीताके इस वचन को सुनकर श्रीरामचन्द्रजी यह बात बोले। (६६)

श्रीराम उवाच—

एकपत्नीव्रतं मेऽद्य कृतं जानासि भामिनि ।
द्वापरेऽङ्गीकरोमीति बहूनां वरदो यतः ।। ६७ ।।

तव वाक्यं करिष्यामि त्वष्टाविंशे कलौ युगे ।
तावदेषा ब्रह्मलोके ब्रह्मणा पूजिता भवेत् ।। ६८ ।।

श्रीरामचन्द्रजी बोले—हे भामिनि! अभी मैंने एक-पत्नी-व्रत किया है, सो तुम जानती हो; चूंकि द्वापर में अङ्गीकार करूँगा, ऐसा वरदान बहुतोंको दिया हुआ है, अतएव अट्ठाइसवें कलियुग में तुम्हारा वचन पूरा करूँगा; तबतक यह ब्रह्मलोक में ब्रह्मासे पूजित हो रहेगा। (६८)

श्रुत्वैवं रामवाक्यं सा जगाम भवनं विधेः ।
पद्मावत्याः कारणं तु भणितं तव सुव्रते ।। ६९ ।।

न मे वाक्यमसत्यं स्यादिति वेदविदो विदुः ।
श्रुत्वा तज्जनने हेतुं बकुलाऽऽनन्दनिर्भरा ।
कौतूहलसमाविष्टा श्रीनिवासमभाषत ।। ७० ।।

श्रीरामचन्द्रजी के इस वाक्यको सुनकर वह ब्रह्मलोक में गयी। हे सुव्रते। पद्मावतीके अवतारका कारण तुमसे मैंने कहा। मेरी बातें असत्य नहीं होतीं, यह वेदके जाननेवाले जानते है। उसकी उत्पत्ति के कारण सुनकर आनन्द एवं कौतूहलसे परिपूर्ण हो बकुला श्रीनिवाससे बोली। (७०)

## श्रीनिवासानुज्ञया नारायणपुरं प्रति बकुलागमनम्

**बकुलोवाच—**

गच्छामि राजेन्द्रसभां सभासदो
यत्राऽसते सर्वकलाविशारदाः ।
आकाशराजस्य पुरीं सुरोत्तमैः
संस्तूयमानां च रमां विगूहिताम् ।। ७१ ।।

